# मुद्राराक्षसम्




( नाटकम् )

महाकवि-श्रीमद्विशाख दत्त-प्रणीतम् ।

पण्डित श्रीसतीशचन्द्र काव्यतीर्थ-विद्यारत्न
विरचितया शिशु विबोधिनी-समाख्यया व्याख्यया
समलङ्कृतम् ।

पण्डित श्रीरसिकचन्द्र कविभूषण महाशयविरचिते
समालोचनादिभिश्चशोभितम् ।

---

हाओड़ा-जेलान्तर्गत कल्याणपुर पोष्टाधीन—
शास्त्रप्रकाश-कार्य्यालयात्
श्रीहरिपद चट्टोपाध्यायेन प्रकाशितम् ।

खृष्टाब्दा १९१९ ।

# निवेदनम्।

भगवत्कृपया मुद्राराक्षसनामधेयं नाटकमिदं प्रकाशितमभूत्। विविधसद्ग्रन्थप्रणेता पूज्यपादाग्रजः सतीशचन्द्र काव्यतीर्थ-विद्यारत्नमहोदयः अस्य नाटकस्य व्याख्यां उपोद्घातञ्च विरचय्य हतभाग्यमनुजं मां दुर्भरशोकभारेण प्रपीड़यन् अकाल एव कालकवलमगात्। नास्ति मे तादृग्वाग्विभवः येनाहं भूमिकादिभिः विद्वज्जनगणस्य मनोरञ्जनं कर्त्तुं शक्नुयाम्। केवलं ग्रन्थादौ कतिपयातिप्रयोजनीयविषयाणां अवश्यवक्तव्यतया गमदग्रजलोचनं तान् एव कथयामि। पूजनीयाग्रजस्य लोकान्तरगमनात् परं वर्षद्वयाधिकं यावत् अस्य मुद्रणकार्य्यं प्रतिबद्धमासीत्। परमकृपालोः विद्योत्साहिनः प्रकाशकमहोदयस्य साहाय्येन इदं मुद्रितमभूत्। निखिलमङ्गलनिदानस्य भगवतः समीपे प्रार्थये, प्रकाशकमहोदयः दीर्घं जीवन् शास्त्रीयग्रन्थरत्न राशिप्रकाशपूर्व्वकं विद्यार्थिनां विद्यार्ज्जने सर्व्वथैव साहाय्यं करोत्विति। मुद्राराक्षसस्य बहूनि खलु संस्करणानि प्रकाशितानि, न तेषामेकमपि सम्यगुपयुक्तं तरलमतीनां पाठार्थिनां सुखपाठाय। ते हि व्याख्यातारः सरलव्याख्यानस्यातीवप्रयोजनीयत्वं अगणयन्तः केवलं स्वशक्तिप्रदर्शनार्थं व्याख्यां व्याख्येयविषयादपि दुर्बोध्यामकुर्व्वन्। मदग्रजस्तु तस्मादेव अतिसरलया भाषया अस्य नाटकस्य व्याख्यां विधाय विद्यार्थिनां उपकारं कर्त्तुमचेष्टत। अत्र च तस्य कृतकार्य्यतामकृतकार्य्यतां वा सुधीजना एव विचारयन्तु। इदमप्यवश्यवक्तव्यम्, यत् कविराजकुलशेखर-कविभूषणोपाधिकः श्रीयुक्त अमृतलालगुप्तः महोदयः अस्य ग्रन्थस्य सम्यक् परिशोधन महान्तमायासं स्वीकृतवान्, तस्मै समुचितां कृतज्ञतां दर्शयामीत्यलं प्रपञ्चेन।

कलिकातायां
१८४१ शकाब्दीय
पौष वा मासस्य सप्तविंश दिवसे।

विनीत—
श्रीरमेशचन्द्र देवशर्म्मणः।
( कविभूषणोपाधिकस्य )।

# मुद्राराक्षसप्रतिपाद्यविषयस्य संक्षेपः ।

अस्य नाटकस्य प्रथमेऽङ्के चाणक्यस्य राजनीतिसंयोजनं, चरमुखात् शत्रुचेष्टिताकर्णनञ्च द्वितीये चरराक्षससंवाद, चरमुखात् स्वप्रयासवैफल्यश्रवणञ्च राक्षसस्य, तृतीये चाणक्यस्य स्वमन्त्रिमन्त्रनिवारणोपदेशेन चन्द्रगुप्तेन समं कृतककलह, चतुर्थे चरमुखात् कुसुमपुर-वृत्तान्ताकर्णनेन राक्षसस्य खेद, मलयकेतुना च प्रयाणाकरणविचार, पञ्चमे राक्षसं प्रति मलयकेतोरविश्वास, राक्षसनिरसनञ्च, षष्ठे राक्षसस्य चन्दनदासशूलारोपणवार्ताश्रवणात् खेद, कुसुमपुरगमनं, चन्दनदासमोचनाय स्वशरीरार्पणविचारश्च, सप्तमे राक्षसस्यात्मसमर्पणं चन्दनदासस्य मोक्ष, राक्षसस्य चन्द्रगुप्तसाचिव्यग्रहणञ्च वर्णितम् ।

---

# नाटकोक्ताः पुरुषाः ।

चन्द्रगुप्तः—( वृषलः मौर्य्यो वा ) मगधराजः ।

चाणक्यः—( विष्णुगुप्तः कौटिल्यो वा ) चन्द्रगुप्तस्य गुरुरुपदेष्टा च ।

राक्षसः—नन्दानां सचिवः ।

मलयकेतुः—पर्व्वतेश्वरपुत्रः ।

भागुरायणः—चाणक्यचरो मलयकेतो कपटबन्धुश्च ।

निपुणकः<br>
सिद्धार्थकः<br>
समिद्धार्थकः<br>
जीवसिद्धिः } चाणक्यचराः

शार्ङ्गरवः—चाणक्यस्य छात्रः ।

चन्दनदासः—राक्षसस्य बन्धुः रत्नकारश्च ।

शकटदासः—राक्षसस्य प्रधानः कर्म्मकरः ।

विराधगुप्तः—राक्षसचरः ।

करभकः—राक्षसदूतः ।

वैहीनरिः—चन्द्रगुप्तकञ्चुकी ।

जाजलिः—मलयकेतुकञ्चुकी ।

सर्व्वार्थसिद्धिः नन्दमरणानन्तरं राक्षसेन सिंहासने स्थापितः नन्दवंशीयः कश्चित् पुरुषः ।

वैरोचकः राक्षसचरेण चन्द्रगुप्तभ्रान्त्या विनाशितः पर्व्वतेश्वरस्य भ्राता ।

शेखरसेनः ( शेखरको वा )—मलयकेतोः सेनानीः ।

जिष्णुदासः ( विष्णुदासो वा )—अन्यः कश्चित् रत्नकारः ।

चन्दनदासस्य पुत्रः, अनुचराः, कर्म्मकराः, वैतालिकौ, चाणक्यस्य अन्ये गुप्तपुरुषाश्च ।

## नाटकोक्ताः रमण्यः ।

चन्दनदासभार्य्या ।

शोणोत्तरा—चन्द्रगुप्तप्रतीहारी ।

विजया—मलयकेतुप्रतीहारी ।

---

# मुद्राराक्षसम् ।



## प्रथमोऽङ्कः ।

धन्या केयं स्थिता ते शिरसि ? शशिकला, किन्नु नामैतदस्याः ?
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ?
नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दुः,
देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ १

अथ मुद्राराक्षसव्याख्या ।

सतीपादनतीभक्त्या श्रीसतीश सतां मुदे ।
काव्यतीर्थस्तनोतीमां व्याख्यां शिष्यविबोधिनीम् ॥

अथ तत्रभवानशेषपदवाक्यप्रमाणपारावारीणो विबुधकुलविवस्वान् विशाखदत्तो नाम महाकवि मुद्राराक्षसं नाम नाटकं प्रारिप्सुः प्रारिप्सितार्थविघ्नपरिसमाप्तिकाम आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखमित्यालङ्कारिकवचनप्रामाण्यात् ग्रन्थारम्भे आशीर्वचनरूपां नान्दीमाचरति । धन्येत्यादि । अत्र प्रथमपादत्रये पार्वतीपरमेश्वरयोरुक्तिप्रत्युक्ती । हे प्रभो इत्याध्याहार्य्यम् । ते तव शिरसि मस्तके स्थिता । धन्या पुण्यवती इयं परिदृश्यमाना का किन्नामधेया ? इति पार्वतीप्रश्नः । शशिकला चन्द्रकला विराजते इति शेषः । इति शिवस्य प्रत्युक्तिः । अस्याः परिदृश्यमानायाः किम् एतत् शशिकलेति नाम आख्या । इति पार्वती प्रश्नः । अस्याः परिदृश्यमानायाः तत् पूर्वोक्तं शशिकलेति नाम एव सदैव, एतत् इदं नाम परिचितमपि सुविख्यातमपि कस्य हेतोः केन कारणेन ते तव विस्मृतम् । इति शिवस्य प्रत्युक्तिः । नारीं तव शिरोऽवस्थितामिमां शेषः स्त्रियं पृच्छामि । इन्दुं चन्द्रं न पृच्छामि, चन्द्रविषयको न मे प्रश्न इत्यर्थः । इति पार्वतीप्रश्नः । यदि इन्दुश्चन्द्रो न प्रमाणं भवतीति शेषः । प्रमाणत्वेन चन्द्रो न स्वीक्रियते त्वयेत्यर्थः । तर्हि विजया चिरसहचरी ते सखी कथयतु तथ्यं वदतु । इति शिवस्य प्रत्युक्तिः । इति अनेन प्रकारेण देव्याः पार्वत्याः सकाशात् सुरसरितं गङ्गां निह्नोतुं अपलपितुं इच्छोः अभिलषतः विभोः नियन्तुरुक्तसमस्य देवस्य शङ्करस्येत्यर्थः शाठ्यं कापट्यं वक्रोक्तिरूपमिति यावत् वः युष्मान् अभिनयदिदृक्षया समागतान् सामाजिकान् अव्यात् पायात् । अत्र स्रग्धरावृत्तं लक्षणं यथा

अपि च।

पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम्।
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधारानुरोधात् त्रिपुरविजयिनः पातु वो दुःखनृत्यम्॥ २

नान्द्यन्ते—सूत्रधारः। (क) अलमतिप्रसङ्गेन। आज्ञापितोऽस्मि परिषदा, यथा—'अद्य त्वया सामन्तवटेश्वरदत्तपौत्रस्य महाराजपद-भाक्पृथुसूनोः कवेः विशाखदत्तस्य कृतिः मुद्राराक्षसं नाम नाटकं

त्रिमुनियतियुता स्रग्धराकीर्तितेयमिति लक्षणात्। अत्र वक्रोक्तिरलङ्कारः। अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्, यदि अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा। इति लक्षणात्॥ १

पादस्येति। पादस्य चरणस्य, अत्र पादयोरिति वक्तव्ये जातावेकवचनं, एकपदस्खलनेन नृत्यासम्भवात्, स्वैरपातैः स्वच्छन्दविचरणैः आविर्भवन्तीं जायमानां उत्पद्यमानामित्यर्थः, अत्र 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट्। अवने धरित्र्या अवनतिं अधोगमनं रक्षतः निवारयतः, अत्र निषेधार्थे रक्षधातुः प्रयुक्तः। सर्वान् लोकान् भुवनानि अति अतिक्रम्य गच्छन्ति ये ते सर्वलोकातिगाः तेषां, अतिक्रान्तसकलभुवनानामित्यर्थः। 'लोकस्तु भुवने जने' इत्यमरः। दोष्णां बाहूनां सङ्कोचेन संक्षेपेण मुहुः पुनः पुनः अभिनयतः अङ्गहारैः करादिव्यञ्जनार्थं अवस्थानुकरणं कुर्वत इत्यर्थः। अन्यथा विपुलबाहुविक्षेपणेन चतुर्दश भुवनानि विलयं गच्छेयुरिति भावः। दाहभीतेः भस्मीभवनभयात्, ज्वलनकणमुचः अग्निकणवर्षिणीं अतएव उग्रां दारुणां दृष्टिं नेत्रं लक्ष्येषु द्रष्टव्यवस्तुषु न बध्नतः न क्षिपतः, विश्वदाहपरिहारेच्छया कथञ्चिद्दृष्टिक्षेपं कुर्वत इत्यर्थः। त्रिपुरविजयिनः शङ्करस्य आधारानुरोधात् आधारस्य आश्रयीभूतभूतलादिकस्य अनुरोधात् इति इत्थम्भूतं दुःखेन कष्टेन नृत्यं दुःखनृत्यं कुत्सितनर्तनं च युष्मान् सामाजिकान् पातु रक्षतु। अत्रापि स्रग्धरा वृत्तम्। अत्रातिशयोक्तिरलङ्कारः 'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।' इति दर्पणोक्तलक्षणात्॥ २

(क) नन्दयति लोकानिति नान्दी, सा च आशीर्वादादिरूपा वाक्, तस्या अन्ते अवसाने। "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते। देवद्विजनृपादीनां तस्मात् नान्दीति संज्ञिता। माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत"। इति साहित्यदर्पणम्। अत्र श्लोकद्वयेनाष्टपदतया नान्दीयं अष्टपदा। सूत्रधारः प्रधाननटः। कथयतीति शेषः एवं सर्वत्र। अतिप्रसङ्गेन अतिबाहुल्येन। अलं निष्प्रयोजनमित्यर्थः। परिषदा सभ्यया परिषदि समुपस्थितैः सभ्यवर्गैरित्यर्थः। सामन्तः अधिराजः श्री वटेश्वरदत्तः तस्य पौत्रः नप्ता। महाराज इति पदं भजते यः स महाराजपदभाक् महाराजोपाधिक इत्यर्थः। स चासौ पृथुरिति तथोक्तः तस्य सूनुः पुत्रः, तस्य। कवेः काव्यरचयितुः विशाख

नाटयितव्यम्' इति। यत् सत्यं काव्यविशेषवेदिन्यां परिषदि प्रयुञ्जानस्य ममापि चेतसि सुमहान् परितोषः प्रादुर्भवति।—(क)

चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते॥ ३

तद् यावद् इदानीं गृहं गत्वा गृहिणीम् आहूय गृहजनेन सह सङ्गीतकम् अनुतिष्ठामि। (ख) [परिक्रम्य अवलोक्य च] (ग) इमे नो गृहाः, तत् यावत् प्रविशामि। [नाट्येन प्रविश्य अवलोक्य च] (घ) अये! तत् किमिदम्! अस्मद्गेहेषु महोत्सव इव दृश्यते? स्वस्वकर्मणि अधिकतरम् अभियुक्तः परिजनः (ङ)। तथाहि,—

वहति जलमियं पिनष्टि गन्धान्
इयमियमुद्ग्रथते स्रजो विचित्राः।

दत्तस्य तन्नामककवेरित्यर्थः। मुद्रया अङ्गुलिमुद्रया गृहीतः राक्षसः मन्त्रणया तदर्पणमित्यर्थः यस्मिन् तत् मुद्राराक्षसम्। नाटकं दृश्यकाव्यम्। नाटयितव्यं नाट्येन दर्शयितव्यमित्यर्थः। स्थिरनिश्चयार्थे यत्सत्यं प्रयुज्यते, ध्रुवं ब्रवीमीत्यर्थः। काव्यविशेषवेदिन्यां काव्यस्य उत्कर्षापकर्षविवेचननिपुणायामित्यर्थः। परिषदि सभायाम्। प्रयुञ्जानस्य प्रयोगमभिनयं कुर्वतः। सुमहान् अतिविपुलः। परितोषः आनन्दः।

बालिशस्य मूर्खस्य कृषिकार्य्यानभिज्ञस्य अपि जनस्येति शेषः। कृषिः कर्षणं लक्षणया बीजमित्यर्थः। सत्क्षेत्रे उत्कृष्टस्थाने उर्वरभूमौ इत्यर्थः, पतिता निक्षिप्ता सती चीयते उपचीयते वर्द्धते इत्यर्थः। शालेः शालिधान्यस्य स्तम्बकरिता पुष्टिकरत्वं विस्तारलक्षणम् वप्तुर्बीजरोपकस्य गुणं नैपुण्यं न अपेक्षते नाकाङ्क्षति। उर्वरभूमिनिहितं बीजं आधारगुणेनैव पुष्टिं लभते, न तु वप्तुर्वैलक्षण्यमपेक्षते, एवमहमपि सहृदयदर्शकगुणेनैव अभिनये दक्षतरो भवेदिति परमानन्द इत्यर्थः। अत्र दृष्टान्तालङ्कारः॥ ३

(ख) गृहिणीं पत्नीं नटीमित्यर्थः। आहूय आकार्य्य। "न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते" इति वचनात्, गृहं पत्नी एव जनः तेन सह समवेत इत्यर्थः।

(ग) परिक्रम्य इतस्ततो गत्वा। अवलोक्य दृष्ट्वा। इमे दृश्यमानाः। गृहा भवनानि, भवनवाचकगृहशब्दस्य नित्यपुंस्त्वं बहुत्वञ्च।

(घ) नाट्येन प्रविश्य प्रवेशाभिनयं कृत्वेत्यर्थः।

(ङ) महोत्सव आनन्दातिशय इत्यर्थः। अधिकतरम् अत्यर्थम्। अभियुक्तः अभिनिविष्टः। परिजनः परिवारवर्गः।

इयं एषा काचिदित्यर्थः जलं वहति आनयति। इयं एषा अपरेत्यर्थः गन्धान् चन्दनादि गन्धद्रव्याणि पिनष्टि पेषयति। इयमेषा अन्येत्यर्थः विचित्राः मनोरमाः स्रजः माल्यानि उद

मुसलमिदमियञ्च पातकाले
मुहुरनुयाति कलेन हुङ्कृतेन ॥ ४

भवतु कुटुम्बिनीम् (च) आहूय पृच्छामि। [नेपथ्याभिमुखम् (छ) अवलोक्य]—

गुणवत्युपायनिलये! स्थितिहेतो! साधिके! त्रिवर्गस्य।
मद्भवननीतिविद्ये! कार्य्यात् आर्य्ये! द्रुतमुपेहि ॥ ५

नटी। [प्रविश्य।] अज्जउत्त! इअम्हि, अज्जाणिओएण (ज) मं अणुगेह्णदु अज्जो ॥ (१)

सूत्र। आर्य्ये! तिष्ठतु तावत् आर्य्यानियोगः, कथय किमद्य भवत्या भगवतां ब्राह्मणानाम् उपनिमन्त्रणेन एतत् कुटुम्बकम् अनुगृहीतम्, अथवा अभिमता भवनम् अतिथयः प्राप्ता, यत् एष पाकविशेषारम्भः? (झ)

नटी। अज्ज! अज्ज आमन्तिदा मए भअवन्तो बम्हणा। (२)

---

(१) आर्य्यपुत्र! इयमस्मि, आज्ञानियोगेन मामनुगृह्णातु आर्य्यः।

(२) आर्य्ये! अद्य आमन्त्रिता मया भगवन्तो ब्राह्मणाः।

---

पतने। इदं यावत् धानकाले निक्षेपसमये इदं मुसलं कलेन मधुरेण हुङ्कृतेन हुं इति ध्वनिना मुहुः वारं वारं अनुयाति अनुकरोति। अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः ॥ ४

(च) कुटुम्बिनीं गृहिणीम्।

(छ) नेपथ्यं वेशरचनास्थानं तदभिमुखम्।

हे गुणवति पातिव्रत्यादिगुणयुक्ते, उपायानां सांसारिककार्य्यसम्पादनसाधनानां निलय आश्रयो यस्याः सा तथोक्ता, तत्सम्बोधने हे उपायनिलये। स्थितेर्लोकयात्राया हेतु कारणभूता तत्सम्बोधने। त्रिवर्गस्य धर्मार्थकामस्य "त्रिवर्गो धर्मकामार्थैः" इत्यमरः। साधिके सम्पादिके, "धर्मार्थकामनिष्पत्तिः स्त्रिय सेव्याः प्रयत्नतः" इति वचनात्। मम भवनस्य नीतिविद्यास्वरूपिणि, आर्य्ये मान्ये, "वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परं" इत्यालङ्कारिकवचनात्। कार्य्यात् विशिष्टकार्य्यवशात् द्रुतं शीघ्रं उपेहि समीपं आगच्छ। आर्य्याछन्दः। यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या। इति लक्षणात् ॥ ५

(ज) आज्ञानियोगेन आदेशदानेनेत्यर्थः।

(झ) भगवतां महाभावानां। उपनिमन्त्रणेन भोजनार्थमामन्त्रणेन अभिमता अभीष्टा प्रार्थिता इति यावत्। पाकविशेषस्य विशिष्टपाकस्य आरम्भः उपक्रमः, क्रियते इति शेषः।

सूत्र। कथय कस्मिन् निमित्ते।

नटी। उवरज्जदि किल भअवं चन्दो त्ति। (३)

सूत्र। क एवमाह?

नटी। एवं क्खु णअरवासी जणो मन्तेदि। (४)

सूत्र। आर्य्ये! कृतश्रमोऽस्मि चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे, तत् प्रवर्त्त्यतां भगवतो ब्राह्मणान् उद्दिश्य पाकः, चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि (ञ)। पश्य,—

"क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम्।
अभिभवितुमिच्छति बलात्———" [इत्यर्द्धोक्ते]।

[नेपथ्ये।] आः! क एष मयि स्थिते चन्द्रमभिभवितुमिच्छति बलात्? (ट)

सूत्र। "———रक्षत्येनं तु बुधयोगः॥ ६

(३) उपरज्यति किल भगवान् चन्द्र इति।
(४) एवं खलु नगरवासी जनो मन्त्रयति।

(ञ) चतुःषष्टिः अङ्गानि अवयवाः प्रतिपाद्यविषया इत्यर्थः यस्य, तथोक्ते। प्रवर्त्त्यतां समारभ्यतां त्वयेति शेषः। उद्दिश्य लक्ष्यीकृत्य। चन्द्रोपरागं प्रति चन्द्रग्रहणविषये। विप्रलब्धा वञ्चिता प्रतारितेति यावत्।

क्रूर दारुणो ग्रहः स प्रसिद्धः केतुः राहुरित्यर्थः, एकदेशोत्पन्नत्वात् अभिन्नत्वेन निर्देशः। केतुपदेन मलयकेतुरिति श्लिष्टपदबोधाय केतुपदोपादानं बोद्धव्यम्। पूर्णं परिपूर्णं मण्डलं बिम्बं यस्य स तथोक्तम्। "बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः। चन्द्रमसं सोमम्। इदानीं पौर्णमास्यां बलात् प्रसभेन अभिभवितुं ग्रसितुम् इच्छति अभिलषति। किन्तु बुधयोगः बुधग्रहसन्निकर्षः एनं चन्द्रमसं रक्षति त्रायते। श्लिष्टार्थस्तु, क्रूरे निष्ठुरकार्य्ये कूटव्यवहारे इति यावत् ग्रहः आग्रहः आसक्तिरिति यावत् यस्य सः क्रूरग्रहः राक्षसः केतुना मलयकेतुना सहवर्त्तमानः सकेतुः सन् इदानीं सम्प्रति असम्पूर्णमण्डलं अचिरराज्याभिषिक्ततया अवशीभूतप्रकृतिपुञ्जं चन्द्रं चन्द्रगुप्तं बलात् बलं सैन्यम् आश्रित्य सेनाबलेनेत्यर्थः अभिभवितुं पराभवितुम् इच्छति अभिलषति। बुधेन विदुषा चाणक्येन योगः बुधयोगः चाणक्यमेलनं एनं चन्द्रगुप्तं रक्षति। चाणक्यगुप्तश्चन्द्रगुप्तो न अभिभूतो भविष्यतीत्यर्थः। आर्य्यावृत्तम्। श्लेषालङ्कारः तल्लक्षणं—श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते। इति साहित्यदर्पणे॥ ६

(ट) आः इति कोपसूचकमव्ययम् "आस्तु स्यात् कोपपीडयोः" इत्यमरः। एष क्रियापदम्।

नटी। अज्ज! को उण एसो धरणिगोअरो भविअ चन्दं गहाभिजोआदो (ठ) रक्खिदुं इच्छदि? (५)

सूत्र। आर्य्ये! यत् सत्यं मयाऽपि न उपलक्षितः। भवतु भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये। (ड) [ क्रूरग्रह इत्यादि पुनः पठति ]।

[ नेपथ्ये। ] आः! क एष मयि स्थिते चन्द्रगुप्तम् अभिभवितुम् इच्छति बलात्? (ढ)

सूत्र। [ आकर्ण्य ]। (ढ) आं ज्ञातम्

कौटिल्य —" [ इत्यर्द्धोक्ते नटी भयं नाटयति ]। (ण)

सूत्र।—"——कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्य्येन्दोर्द्विषदभियोग इत्यवैति॥ ७

तदित आवां गच्छावः। [ निष्क्रान्तौ। ]

---

(५) आर्य्य! क पुनरेष धरणिगोचरो भूत्वा चन्द्रं ग्रहाभियोगात् रक्षितुमिच्छति?

---

(ठ) धरणिगोचरः धरणिः पृथिवी गोचरः आश्रयो यस्य स तथोक्तः भूमौ स्थित इत्यर्थः। ग्रहाभियोगात् राहोराक्रमणात्। *द्विधिक्षितमुक्तपक्षे द्विविक्षितस्य* रक्षणासम्भवात् अयं मया पृष्ट इत्यर्थः।

(ड) उपलक्षित दृष्टः। भूयः पुनरपि। अभियुक्तः अभिनिविष्टः सावधान इत्यर्थः। स्वरस्य कण्ठस्वरस्य व्यक्तिं प्रकाशं उपलप्स्ये ज्ञास्यामि। कण्ठस्वरपरिचयेन ज्ञास्यामीत्यर्थः।

(ढ) आकर्ण्य स्वरपरिचयेन वाक्यप्रयोक्तारं चाणक्यं बुद्ध्वेत्यर्थः।

(ण) भयं नाटयति शरीरादि चेष्टया व्यञ्जयतीत्यर्थः।

कुटिला वक्रा मतिर्बुद्धिर्यस्य स कुटिलमतिः वक्रबुद्धिः स एष पूर्व्ववाक्यप्रयोक्ता कौटिल्य चाणक्यः। येन क्रोधाग्नौ कोपानले नन्दवंशः योगानन्दकुलं प्रसभं बलात् अदाहि भस्मीकृतः। चन्द्रस्य शशाङ्कस्य ग्रहणं इति श्रुतेः श्रवणात्, समानं नाम यस्य स सनामा तस्य सनाम्नः समाननामधेयस्य मौर्य्येन्दोः मौर्य्यचन्द्रस्य चन्द्रगुप्तस्येत्यर्थः। द्विषता शत्रुणा सह अभियोगः द्विषदभियोगः विपक्षाक्रमणमित्यर्थः इति अवैति अवगच्छति। नन्दस्य राज्ञः मुरानाम काचित् दासी आसीत्, तद्वंशजातत्वात्तस्य मौर्य्य इति नाम्ना प्रसिद्धिः। अत्र नन्दवंश एव वंशः इत्यारोपणं प्रति क्रोधे अग्नित्वारोपणं कारणतया श्लिष्टपरम्परितं रूपकमलङ्कारः। प्रहर्षिणीवृत्तम्। *म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्।* इति लक्षणात्। स च उपक्षेपो नामाङ्गम्। ७

इति प्रस्तावना। (त)

[ ततः प्रविशति मुक्तां शिखां परामृशन् चाणक्यः ]। (थ)

चाणक्यः। कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुम् इच्छति बलात्?—

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्त्तुमिच्छति हरेः परिभूय दंष्ट्राम्? ॥ ८

अपि च।—

नन्दकुल-कालभुजगीं कोपानलबहल-नील-धूमलताम्।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे? ॥ ९

(त) प्रस्तूयते उपक्रम्यते अनया इति प्रस्तावना। तदुक्तम्—
नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥ इति साहित्यदर्पणे।
सा चात्र उद्घात्यकाख्या, यथा तत्रैव,—
पदानि त्वगतार्थानि तदर्थगतये नराः।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते॥ इति।

(थ) मुक्तां बन्धनरहितां शिखां शीर्षस्थकेशान्। "शत्रोर्वैकुलमादाय यावन्नयाति सर्व्वशः। तद्वदेव स्थिता केशा सा शिखा तां न बन्धयेत्" इति वचनात्। परामृशन् स्पृशन्॥

आस्वादितेति। जृम्भया मुखव्यादानेन विदारितं प्रसारितं मुखं आननं यस्य तस्य जृम्भाविदारितमुखस्य हरेः सिंहस्य मुखात् वदनात्, आस्वादितं पीतं यत् द्विरदशोणितं गजरक्तं तेन शोणा लोहिता शोभा यस्याः सा तां आस्वादितद्विरदशोणितशोणशोभां सन्ध्यारुणां सान्ध्यरागेण रक्तवर्णां शशलाञ्छनस्य शशाङ्कस्य कलां चन्द्रांशं इव स्फुरन्तीं शोभमानां दंष्ट्रां दन्तं परिभूय पराजित्य हरिमिति शेषः, कः किन्नामधेयः पुरुषः हर्तुं उत्पाटयितुं इच्छति। नन्दवंशस्य समुन्मूलनेन लब्धां चन्द्रलेखावन्नयनाभिरामां प्रतिदिवसोपचीयमानाञ्च मौर्य्यचन्द्रं हर्त्तुमिच्छन् पञ्चाननवदनाद्दंष्ट्राकर्षणवदशक्यमाचरतीत्यर्थः। अत्र अप्रस्तुतविषयात् प्रस्तुतस्याधिगमेनाप्रस्तुतप्रशंसालङ्कारः। स च कलामिवेत्यत्र उपमया संसृज्यते। अत्र वसन्ततिलकं वृत्तम्। "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात्॥ ८

नन्देति। वध मार्गं अर्हति इति वध्यः मारयितव्यः कः पुमान्, नन्दकुलस्य नन्दवंशस्य

अपि च।—

उल्लङ्घयन् मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः।
सद्यः परात्मपरिमाणविवेकमूढः
कः शालभेन विधिना लभतां विनाशम्? ॥ १०

अये शार्ङ्गरव। शार्ङ्गरव। (द)

शिष्य। [प्रविश्य]। उपाध्याय। आज्ञापयतु। (ध)

चाण। वत्स। उपवेष्टुमिच्छामि। (न)

शिष्य। उपाध्याय। ननु इयं सन्निहितवेत्रासनैव द्वारप्रकोष्ठशाला, तदस्याम् उपवेष्टुम् अर्हति उपाध्यायः। (प)

चाण। वत्स। कार्य्याभियोग एव अस्मान् आकुलयति न पुन उपाध्यायसहभूः शिष्यजने दुःशीलता। (फ) [नाट्येन उपविश्य आत्म

कालभुजगीं कालसर्पस्वरूपां नन्दवंशनाशिनीमित्यर्थः। कोपानलस्य क्रोधवह्नेः बहुला प्रचुरत नीलाञ्जनवर्णा या धूमलता धूमराजिः तां मे मम शिखां अद्यापि नन्दकुलोन्मूलनमपि प्रतिज्ञा पूरणेऽपीत्यर्थः। बध्यमानां संयम्यमानां न इच्छति। अथवा नन्दवंशध्वंसमपश्यतोऽपि मम प्रीतिकरकार्य्यान्तरोद्योगो मरणाय भवेत् एवेति भावः। अत्र आर्य्यावृत्तं। रूपकालङ्कारः। रूपक अधिकारीपात् विरोधे निरपकर्षः॥ इति वचनात्॥ ९

उल्लङ्घयन्निति। नन्दकुलं नन्दवंश एव काननं अरण्यं तस्य धूमकेतुः वह्निः तस्य नन्दकुलकाननधूमकेतोः नन्दवंशदावानलस्य समुज्ज्वलतः दीप्यमानस्य मम कोपस्य क्रोधस्य प्रतापं प्रभावं तेजः इत्यर्थः उल्लङ्घयन् अतिक्रामन् [illegible] विपक्षस्य आत्मन निजस्य च परिमाणविवेके परिमाणविचारे अविमृश्यविवेचने इत्यर्थः मूढः अज्ञः परात्मपरिमाणविवेकमूढः, आत्मपरयोः शक्तिविवेचने असमर्थ इत्यर्थः। कः पुमान् शालभेन शलभोचितेन विधिना व्यापारेण नाशहेतुना दाहेन पतङ्गवदित्यर्थः। विनाशं ध्वंसं सद्यः झटिति लभतां प्राप्नोतु। अनिवार्य्यवीर्य्ये मदीयकोपानले को भस्मीभवेदिति भावः। अत्र रूपकालङ्कारः स्फुट एव। स च शालभेन इत्युक्तेः विनाशविषयतया तदुपमेयेति प्रतीतेः निदर्शनया संसृष्टः। वसन्ततिलकं वृत्तं। लक्षणन्तु प्रागुक्तम्॥ १०

(द) शार्ङ्गरवाख्य शिष्येति।

(ध) उपाध्याय अध्यापकगुरो इत्यर्थः।

(न) उपवेष्टुं आसितुम्।

(प) सन्निहितं वेत्रं आसनं यत्र सा तादृशी। द्वारि द्वारदेशे प्रकोष्ठः कक्षान्तर मित्यर्थः स एव शाला गृहं। अत्रा वेत्रनिर्म्मितासनशोभिता द्वारप्रकोष्ठशालैवास्ति इत्यर्थः।

(फ) कार्य्ये कर्तव्ये वैरनिर्य्यातनरूपे विषये अभियोगः व्यापृतत्वं मनोयोग इति

गतम्]। (ब) कथं प्रकाशतां गतोऽयमर्थः पौरेषु, यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनन्दराज्यपरिपणनप्रोत्साहितेन पर्वतकपुत्रेण मलयकेतुना सह सन्धाय तदुपगृहीतेन च महता म्लेच्छराजेन परिवृतो वृषलम् अभियोक्तुमुद्यत इति (भ) [विचिन्त्य]। अथवा (म) येन मया सर्वलोकप्रकाशं नन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित्, सोऽहमिदानीं प्रकाशीभवन्तमपि एनम् अर्थं न समर्थः किं प्रशमयितुम्? (म) इति। कुतः, यस्य मम—

श्यामीकृत्याननेन्दूनरियुवतिदिशां सन्ततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य ।
दग्ध्वा सम्भ्रान्तपौरद्विजगणरहितान् नन्दवंशप्ररोहान्
दाह्याभावान्न खेदात् ज्वलन इव वने शाम्यति क्रोधवह्निः ॥ ११ ॥

यावत्। आकुलयति आकुलं करोति व्याकुलयतीत्यर्थः। सह भवति जायते इति सहजम् स्वाभाविकी उपाध्यायस्य सहजम् उपाध्यायसहजम् अध्यापकानां प्राकृतिकीत्यर्थः। दुःशीलता अशिष्टाचारः।

(ब) आत्मगतं स्वगतम्। यत्तु यस्य न सर्वस्य स्वगतं तदिहोच्यते। इति वचनात्।

(भ) प्रकाशतां गतः प्रकाशितः। पौरेषु जनपदेषु। नन्दकुलस्य विनाशेन निधनेन जनितः उत्पन्नः रोषः क्रोधो यस्य स तथोक्तः। पितुः पर्वतकस्य वधः विषकन्याप्रयोगेण घातनं पितृवधः तेन अमर्षितः क्रुद्धः तेन। सकलं समग्रं यत् नन्दराज्यं तस्य परिपणनं दानाङ्गीकारः, समरे चन्द्रगुप्तं विजित्य सर्वं राज्यं तवैव भविष्यतीति स्वीकारः, तेन प्रोत्साहितः तेन। सन्धाय सन्धिं कृत्वा। तेन मलयकेतुना उपगृहीतः स्वीकृतः तेन तदुपगृहीतेन। महता बलवता। परिवृतः परिवेष्टितः समन्वित इत्यर्थः। वृषलं चन्द्रगुप्तम्। अभियोक्तुम् आक्रमितुम् उद्यतः उद्युक्तः।

(म) सर्वेषु लोकेषु प्रकाशः प्रकटनं यस्य सः तं सर्वलोकप्रकाशं सकलजनविदितं नन्दवंशस्य वधं निधनम्। निस्तीर्णा उत्तीर्णा। दुस्तरा दुरुहा। प्रतिज्ञासरित् प्रतिज्ञानदी। स दृढप्रतिज्ञ इत्यर्थः। इदानीमधुना। प्रकाशीभवन्तं बहुलीभवन्तमित्यर्थः। एनं मलयकेतुना राक्षसेन क्रियमाणं चन्द्रगुप्ताभियोगं अर्थं विषयं। प्रशमयितुं निवारयितुं। समर्थः सक्षमः भवामीति प्रश्नः।

श्यामीति। क्रोधवह्निः कोपानलः, यस्य ममेति प्रागुक्तेन पदेन सह सम्बन्धः। अरीणां शत्रूणां युवतयः स्त्रियः एव दिशः, तासां तथोक्तानां आननानि इन्दव इव तान् आननेन्दून् वदनचन्द्रान् सन्ततैः प्रवृद्धैः शोकाः पतिपुत्रादिवियोगजनितखेदा एव धूमाः तैः शोकधूमैः।

अपि च ।—

शोचन्तोऽवनतैर्नराधिपभयाद् धिक्शब्दगर्भैर्मुखैः
मामग्रासनतोऽवकृष्टमवशं ये दृष्टवन्तः पुरा ।
ते पश्यन्तु तथैव सम्प्रति जना नन्दं मया सान्वयं
सिंहेनेव गजेन्द्रमद्रिशिखरात् सिंहासनात् पातितम् ॥ १२

सोऽहमिदानीम् अवसितप्रतिज्ञाभरोऽपि वृषलापेक्षया (य) शस्त्रं धारयामि । येन मया—

समुत्खाता नन्दा नव हृदयरोगा इव भुवः
कृता मौर्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥ १२

ग्लानिर्योत्पादने शोकधूमयोस्तुल्यत्वात् । व्यामोहितस्य मलिनीकृतस्य । सचिवाः अमात्या एव द्रुमाः, तैश्च सचिवतरुश्च. । नयः नीतिरेव पवनः वायुः तेन हतं चालितं, भीत एव भस्म सत् । कामं पर्याप्तं यथा तथा प्रकीर्य विक्षिप्य पुरे निवसन्ति ये ते पौरा एव पालिता ये द्विजगणाः ब्राह्मणगणा पक्षिगणाश्च सम्भ्रान्ताः. सन्ततः ये पौरद्विजगणाः तैः रक्षितान् शून्यान् नन्दस्य वंशाः सन्ताना वेणवश्च तेषां प्ररोहा अङ्कुराः तान् नन्दवंशप्ररोहान् दग्ध्वा भस्मीकृत्य । दाह्यस्य दहनयोग्यस्य वस्तुनः अभावात् अविद्यमानत्वात् न तु खेदात् श्रमान्मनात् ग्लानिवशादित्यर्थः. । वने अरण्ये ज्वलन इव दावानल इव कोपोऽयं, शाम्यति विरमति । अत्र परम्परितरूपकालङ्कारः तच्च उपमया संसृज्यते । स्रग्धरावृत्तं ॥ ११

शोचन्त इति । ये जना पुरवासिनः पुरा प्राक् नराधिपात् नन्दनृपतेः भयं आशङ्का तस्मात् दुःखप्रकाशनपरिहारार्थमुच्चैःस्वरेणाकथनस्य अनवसरत्वात् राज्ञः कोपः स्यादिति भीत्या, धिक् इति शब्दः गर्भे अन्तरे येषां तानि तैः धिक्शब्दगर्भैः. अवनतैः दुःखदर्शनात् नम्रीकृतैरित्यर्थः । मुखैः वदनैः उपलक्षिताः शोचन्तः अनुशोचं कुर्वन्तः सन्तः, अवशं विवशं यथा स्यात् अग्रासनं तस्मात् अग्रासनतः अग्रासनात् अवकृष्टं अपसारितं त्याजितमित्यर्थः । अवशं तदानीं असहायत्वेन दुर्बलं [redacted] दृष्टवन्तः दृष्टाः । सम्प्रति इदानीं ते पूर्वकालदर्शिनो जनाः पौराः सिंहेन केसरिणा अद्रिशिखरात् गिरिशृङ्गात् गजेन्द्रं करिवरमिव सिंहासनात् सिंहविशिष्टराजासनात् पातितं च्यावितं सान्वयं सवंशं नन्दं तथैव अवनतमुखं पश्यन्तु अवलोकयन्तु । पश्यन्तः पूर्ववत् शोचन्तु इत्यर्थः । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तं । सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितं इति लक्षणात् ॥ १२

(य) अवसिता समाप्ता प्रतिज्ञा प्रतिज्ञाभरो येन स तथोक्तः । वृषलस्य चन्द्रगुप्तस्य अपेक्षया अनुरोधेन तदा ।

समुत्खाता इत्यादि । येन मयेति पूर्वेण सह सम्बन्धः. । येन मया भुवः पृथिव्याः हृदयरोग

अथ वा, अगृहीते राक्षसे, किमुत्खातं नन्दवंशस्य, किं वा स्थैर्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः ? [विचिन्त्य] अहो। राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः, स खलु, कस्मिंश्चित् अपि जीवति नन्दान्वयावयवे, वृषलस्य साचिव्यं ग्राहयितुं न शक्यते। तदभियोगं प्रति, निरुद्योगः अस्माभिः अवस्थापयितुं शक्य इति अनया एव बुद्ध्या,तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः, यावत् असौ मलयकेतुम् अङ्गीकृत्य अस्मदुच्छेदाय विपुलतरं प्रयत्नम् उपदर्शयति एव। [प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा] साधु अमात्य राक्षस ! मन्त्रिबृहस्पते ! साधु। (१) कुतः ?—

इव तन्मन्त्रयपि जाता तथा इव अतिदुःशीलत्वान्नन्दाभागिनि भावः। मम नन्दाः समुत्खाताः समुन्मूलिताः। सरसि कासारे, "कासारः सरसीसरः" इत्यमरः। नलिनी पद्मिनीव मौर्ये चन्द्रगुप्ते लक्ष्मीः राज्यश्रीः स्थिरं पदं स्थानं यस्याः सा तथोक्ता स्थिरपदा निश्चला चिरस्थायिनीत्यर्थः जाता सुप्रतिष्ठितेत्यर्थः। अभियुक्तेन अभिनिविष्टेन मनसा चित्तेन द्वयोः विविधयोः कोपप्रीत्योः क्रोधानुरागयोः तुल्यं अनुरूपं उपयुक्तमित्यर्थः। सारं न्याय्यं "सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु" इत्यमरः। द्वितीयं विप्रकारं निग्रहानुग्रहरूपं गिनर्थः। फलं विभजति असौ सुहृदि मित्रेषु विभक्तं निभक्ष्यमर्चनमित्यर्थः। अत्रोपमा लङ्कारः स्फुट एव। शिखरिणी वृत्तं। रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी। इति लक्षणात्॥ १२

(१) अगृहीते अवशीकृते। उत्खातं उत्पाटितं। स्थैर्यं स्थिरता अचञ्चलत्वमिति यावत्। चन्द्रगुप्तलक्ष्म्याः चन्द्रगुप्तस्य राजश्रियः। निर्नास्ति अतिशयो यस्मात् स निरतिशयः अतिशयितः। भक्तिगुणः अनुरागप्रकर्षः। कस्मिंश्चित् एकस्मिन्नपि। जीवति विद्यमानजीवने, प्राणान् धारयतीत्यर्थः। नन्दस्य अन्वयः वंशः नन्दान्वयः तस्य अवयवः अङ्गं तत्सम्पर्कीणो जन इत्यर्थः। तस्मिन् नन्दान्वयावयवे नन्दकुलसम्पर्किते। सचिवस्य कर्म साचिव्यं मन्त्रित्वं। ग्राहयितुं स्वीकारयितुं। शक्यते पार्यते। तदभियोगं प्रति तस्य नन्दान्वयावयवस्य अभियोगं राज्ये स्थापनमित्यर्थः, तं प्रति नन्दान्वयावयवस्य राज्ये पुनः स्थापनमुद्दिश्य। निर्नास्ति उद्योगः अनुष्ठानं यस्य स तथोक्तः, निरुद्यम इत्यर्थः। अव स्थापयितुं सम्यक्कर्तुं। अनया एवम्भूतया। तपोवनगतः वानप्रस्थाश्रमस्थ इत्यर्थः। घातितः मदीयगूढचरेण व्यापादितः। तपस्वी वराकः। अस्माकं उच्छेदः तस्मै, अस्मदुच्छेदाय अस्मद्विनाशाय। विपुलतरं पर्याप्तं। प्रयत्नं चेष्टां। उपदर्शयत्येव अवश्यं प्रदर्शयिष्यतीत्यर्थः। साधु इत्यश्चर्य प्रशंसायां। मन्त्रिषु बृहस्पतिरिव, इति मन्त्रिबृहस्पतिः, तत् सम्बोधने, मन्त्रिश्रेष्ठ इत्यर्थः। दूरदर्शित्वात् विवेकवत्त्वाच्च।

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते,
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाऽऽशया ।
भर्तुर्यं प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ॥ १४

अत एवास्माकं त्वत्संग्रहे प्रयत्नः- कथमसौ वृषलस्य साचिव्य-ग्रहणेन सानुग्रहः स्यादिति (ल) । कुतः ?—

अप्राज्ञेन च, कातरेण च, गुणः स्यात् सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्, किं भक्तिहीनात् फलम् ?
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः, कलत्रमितरे सम्पत्सु चापत्सु च ॥ १५

ऐश्वर्यादित्यादि । अयं एष लोको जनः ऐश्वर्यात् वैभवात् अनपेतं अविरहितं ऐश्वर्ययुक्तमित्यर्थः ईश्वरं प्रभुं अर्थतः अर्थप्राप्त्याशया सेवते भजते । पुनः ये जना विपत्तिषु आपत्कालेषु तं प्रभुं अनुगच्छन्ति अनुसरन्ति न तु त्यजन्ति तदुद्धाराय यतन्ते च इत्यर्थः । ते तत्प्रतिष्ठाशया तस्य प्रभोः प्रतिष्ठा स्वपदे स्थापनं तस्याः आशया आकाङ्क्षया तया, स्वपदाधिष्ठिते प्रभौ अभीष्टसिद्धिर्भविष्यतीत्याशया अनुगच्छन्तीति शेषः । ये जना भर्तुः प्रभोः प्रलयेऽपि विनाशेऽपि, पूर्वं यत् सुकृतं सुष्ठु कृतम् भर्त्रादिकृतं पूर्वसुकृतं प्रागाचरितसद्व्यवहार इत्यर्थः, तत्र आसङ्गः अनुरागः, तेन पूर्वसुकृतासङ्गेन पूर्वानुष्ठितकार्यस्मरणेन इत्यर्थः । निःसङ्गा नास्ति सङ्गः फलाकाङ्क्षा यत्र सा तया निःसङ्गया अभिसन्धिशून्यया, भक्त्या अनुरागेण, कार्यस्य धूः तां कार्यधुरां कार्यभारं वहन्ति धारयन्ति, कार्यं सम्पादयन्तीत्यर्थः । तादृशाः भवादृशाः ते कतिनः कार्यकुशलाः दुर्लभाः दुष्प्रापाः । भवन्तीति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ १४

(ल) अतएव असाधारणगुणवत्त्वादेव । त्वत्संग्रहे त्वत्प्राप्तौ, प्रयत्नः चेष्टातिशयः । साचिव्यस्य ग्रहणं तेन साचिव्यग्रहणेन मन्त्रित्वस्वीकारेण । सानुग्रहः अनुकूलः सहाय इति यावत् ।

अप्राज्ञेनेत्यादि । अप्राज्ञेन बुद्धिरहितेन निर्बोधेन, कातरेण भयशीलेन भीरुणा च, सानुरागेण अनुरागवता अनुरक्तेनापि । भृत्येनेति शेषः कः किमात्मको गुणः उपकारः स्यात् भवेत् प्रभोरिति शेषः । दुर्बलस्य भृत्यस्य उपकारायोग्यत्वादित्यर्थः । प्रज्ञा च विक्रमश्च प्रज्ञाविक्रमौ, ताभ्यां शालते इति तच्छाली तस्मात् प्रज्ञाविक्रमशालिनः बुद्धिबलशालिनः अपि । किन्तु भक्तिहीनात् अनुरागरहितात् भृत्यात् इति शेषः किं किमात्मकं, कथं लाभः भवेत् । येषां भृत्यानां प्रज्ञाविक्रमभक्तयः बुद्धिबलानुरागाः, समुदिताः समस्ताः गुणाः सन्ति इति शेषः । ते भृत्याः विदुषां नृपतेः राज्ञः सम्पत्सु आपत्सु विपत्सु च स्वकर्मसु । भूत्यै सम्पद्

तत् मयाऽपि अस्मिन् वस्तुनि न शयानेन स्थीयते, यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः, कथमिति ? अत्र तावत् वृषलपर्वतकयोः अन्यतरविनाशेनापि, चाणक्यस्य अपकृतं भवतीति, विषकन्यया राक्षसेन अस्माकम् अत्यन्तोपकारी मित्रं घातितः तपस्वी पर्वतेश्वर इति सञ्चारितो जगति जनापवादः। (व) लोकप्रत्ययार्थम् अस्यैव अर्थस्याभिव्यक्तये पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा, भागुरायणेन अपवाहितः पर्वतकपुत्रो मलयकेतुः। शक्यः खलुः एष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानो बुद्ध्या निवारयितुम्। न पुनरस्य निग्रहात् पर्वतकवधोत्पन्नमयशः प्रकाशीभवत् प्रमार्ष्टुम् अलमिति। (श) अन्यच्च, नियुक्ताश्च मया स्वपरपक्षयोः अनुरक्तापरक्तजनजिज्ञासया बहुविधदेशभाषावेशाचारसञ्चारवेदिनो नानाव्यञ्जनाः प्रणिधयः, अन्विष्यन्ते च कुसुमपुरनिवासिनां नन्दामात्यसुहृदां निपुणतरं प्रचारगतयः (ष)। तत्तत्कारणम् उत्पाद्य कृतकृत्यताम् आपादिताः चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः। शत्रुप्रयुक्तानाञ्च तीक्ष्णरसदायिनां प्रतिविधानं प्रति अप्रमादिनः परीक्षितभक्तयः क्षितिपतिप्रत्यासन्नाः

कल्याणाय इत्यर्थः भवामि इति शेषः। इतरे प्रभादिदृश्याः भव्याः अलवत् कालनवत् स्वार्थाभि शिलात् केवल उपभोगपात्रे इत्यर्थः। अत्रापि शार्दूलविक्रीडितं वृत्तं ॥ १५

(व) अस्मिन् वस्तुनि एतस्मिन् विषये राक्षसस्य संग्रहव्यापारे इत्यर्थः। शयानेन निरुद्योगेन। प्रति अनतिक्रम्य। क्रियते विधीयते। यत्नः चेष्टा। अन्यतरविनाशेन एकतरविनाशेन। अपकृतं अनिष्टं। विषकन्या, यत्सम्भोगात् परं, जीवननाशो भवेत् एवम्भूतलक्षणा नारी, तया। अत्यन्तोपकारी परममित्रं मित्रं समकक्षः। तपस्वी वराकः। सञ्चारितः प्रचारितः। जनापवादः लोकनिन्दा।

(श) लोकानां जनानां प्रत्ययार्थं विश्वासार्थं। अभिव्यक्तये प्रकटनाय। रहसि गोपने। अपवाहितः स्थानान्तरं नीतः। राक्षसमतिपरिगृहीतः, राक्षसस्य बुद्ध्या प्रोत्साहितः। एषः मलयकेतुः। व्युत्तिष्ठमानः विशेषेण उत्थितः, उत्थानाय विहितप्रयत्नः। बुद्ध्या बुद्धिबलेन। निवारयितुं निषेद्धुं। अस्य मलयकेतोः। निग्रहात् निधनात्। पर्वतकवधोत्पन्नं पर्वतकमारणजनितं अयशः अख्यातिं। प्रकाशीभवत् व्यक्तीभवत्। प्रमार्ष्टुं शोधयितुं शमयितुमिति यावत्।

(ष) स्वपरपक्षयोः आत्मशत्रुपक्षयोः। अनुरक्ताः आसक्ताः, अपरक्ताः विरक्ताः, ते एव जनाः, तेषां जिज्ञासा परिज्ञानेच्छा तया। देशाश्च भाषाश्च वेशाश्च आचाराश्च सञ्चाराश्च ते

नियुक्ताः तत्र आप्तपुरुषाः । (स) अस्ति च अस्माकं सहाध्यायि मित्रं विष्णुशर्मा नाम ब्राह्मणः । स च औशनस्यां दण्डनीतौ, चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च परं प्रावीण्यमुपगतः । स च मया क्षपणक-लिङ्गधारी नन्दवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय, सर्व्वनन्दामात्यैः सह सख्यं ग्राहितः, विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविस्रम्भः, तेन इदानीं महत् प्रयोजनमनुष्ठेयं भविष्यति । तदेवम् अस्मत्तो न किञ्चित् परिहास्यते । वृषल एव केवलं प्रधानप्रकृतिषु अस्मासु आरोपितराज्यतन्त्रभारः सततमुदास्ते । अथवा यत् स्वयमभियोग दुःखैः असाधारणैः अपाकृतं तदेव राज्यं सुखयति (ह) कुतः ?—

देशभाषाविशारदसञ्चाराः । बहुविधाश्च ते वेषोल्लापेति तान् विदन्ति ये ते तदभिज्ञा इत्यर्थः । नानाविधानि व्यञ्जनानि चिह्नानि येषां ते तथोक्ताः । विभिन्नवेशधारिण इत्यर्थः । कुसुमपुरे निवसन्ति ये तेषां । अमात्याश्च सुहृदश्च ते अमात्यसुहृदः, नन्दानां अमात्यसुहृदः, तेषां । निपुणतरं अतिसूक्ष्मतरं । प्रचाराः कार्य्यप्रकटनं गतयः अवस्थाविशेषाः । अन्विष्यन्ते मृग्यन्ते ।

(स) ततम् यथायथं इत्यर्थः । कारणं निमित्तं । उत्पाद्य जनयित्वा । ज्ञातसत्यता साफल्य । आपादिता प्रापिता । चन्द्रगुप्तेन सह उत्थातुं शीलं येषां ते चन्द्रगुप्तसहोत्थायिनः । प्रधानपुरुषाः प्रधानकार्य्ये नियुक्ताः पुरुषा इत्यर्थः । तीक्ष्ण, रस विषादि, तद्दातुं शीलं येषां तेषां तीक्ष्णरसदायिनां विषप्रयोक्तॄणामित्यर्थः । प्रतिविधानं प्रति प्रतिकारं उद्दिश्य । अप्रमादिनः सावधानाः । परीक्षिता पर्य्यालोचनया स्थिरीकृता भक्तिः अनुरागो येषां ते तथोक्ताः । क्षितिपतेः भूपालस्य प्रत्यासन्नाः पार्श्वचराः । आप्ताः विश्वस्ताश्च ते पुरुषाश्चेति तथोक्ताः ।

(ह) सह अधीते इति सहाध्यायि सतीर्थ्यः । मित्रं सुहृत् । उशनसा शुक्राचार्य्येण ख्याता औशनसी, सा चासौ दण्डनीतिश्चेति तस्यां, शुक्राचार्य्यप्रणीतनीतिशास्त्रे इत्यर्थः । चतुःषष्टिः अङ्गानि अवयवाः यस्य तस्मिन् चतुःषष्ट्यङ्गे । परं अत्यर्थं । प्रावीण्यं नैपुण्यं उपगतः लब्धः । क्षपणकस्य जैनसन्न्यासिनः लिङ्गं धरतीति तथोक्तः । नन्दवधस्य नन्दनिधनस्य प्रतिज्ञायाः अनन्तरं पश्चात् । सख्यं मैत्रीं । ग्राहितः प्रापितः । विशेषतः विशिष्टभावेन । समुत्पन्नविस्रम्भः सञ्जातप्रत्ययः । तेन मित्रेण । महत् असाधारणं । प्रयोजनं कार्य्यं । अनुष्ठेयं अनुष्ठानार्हं सम्पादनयोग्यं इत्यर्थः । तत् तर्हि । एवमनेन प्रकारेण । परिहास्यते परिहीनं भविष्यति । केवलं एकः । वृषलः चन्द्रगुप्तः । प्रधानप्रकृतिषु प्रधानामात्येषु आरोपितः संस्थापितः राज्यतन्त्रस्य भारो येन स तथोक्तः । उदास्ते उदासीनो वर्त्तते । अभियोगेन उद्यमेन यानि दुःखानि तैः आयासजनितैः कष्टैरित्यर्थः । असाधारणैः अप्राकृतैः अतिमहद्भिरित्यर्थः । अपाकृतं निराकृतं विमुक्तमित्यर्थः । सुखयति आनन्दयतीत्यर्थः ।

स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः ।
गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥ १६

[ ततः प्रविशति यमपटेन चरः ] । (क)

चरः । (६) पणमह जमस्स चलणे, किं कज्जं देवेहिं अण्णेहिं ? ।
एसो क्खु अण्णभत्ताण हरइ जीअं फडफडन्तं ॥ १७

अवि च,—

(७) पुरिसस्स जीविदव्वं विसमादो होइ भत्तिगहिआदो ।
मारेइ सव्वलोअं जो तेण जमेण जीआमो ॥ १८

ता एदं गेहं पविसिअ जमपडं दसअंतो गाअमि । (८) (ख)

[ इति परिक्रामति । ]

---

(६) प्रणमत यमस्य चरणौ किं कार्यं दैवैरन्यैः ? ।
एष खल्वन्यभक्तानां हरति जीवं परिस्फुरन्तम् ॥

(७) अपि च—पुरुषस्य जीवितव्यं विषमाद् भवति भक्तिगृहीतात् ।
मारयति सर्वलोकं यस्तेन यमेन जीवामः ॥

(८) तस्मादिदं गेहं प्रविश्य यमपटं दर्शयन् गायामि ।

---

स्वयमाहृत्येत्यादि । स्वभावतः प्रकृत्या एव स्वयं आत्मना अनन्यसाहाय्यं यथा तथा आहृत्य संगृह्य एकत्र भोज्यं पक्षान्तरे राज्यं इति शेषः । भुञ्जानाः उपभोगं कुर्वाणाः, बलिनः प्रबलाः अपि गजेन्द्राः मातङ्गाः नरेन्द्राः भूपाश्च दुःखिताः दुःखान्विताः आहरणजन्य कष्टं अनुभवन्तः प्रायः बाहुल्येन सीदन्ति अवसन्ना भवन्ति । अनुष्टुब्वृत्तम् । अत्र प्रस्तुताप्रस्तुतगजेन्द्रनरेन्द्रयोः सीदन्तीत्येकधर्माभिसम्बन्धात् तुल्ययोगितालङ्कारः । पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता । इति लक्षणात् ॥ १६

(क) यमपटेन यमचित्रेण उपलक्षितः इत्यर्थः ।

प्रणमतेत्यादि । यमस्य कृतान्तस्य चरणौ पादौ प्रणमत वन्दध्वं यूयमिति शेषः । अन्यैः अपरैः देवैः किं कार्यं किमावश्यकम् । खलु यतः एषः अयं यमः अन्यभक्तानां देवतान्तरसेवकानां परिस्फुरन्तं चेष्टमानं क्रियायुक्तमित्यर्थः जीवं जीवनं हरति बलात् । एतदालोच्य देवतान्तरं विहाय परित्यज्य यमस्यैव उपासना विधेया अन्यथा त्वसमये यमालये आतिथ्य स्वीकार्यमित्यर्थः ॥ १७

पुरुषस्येत्यादि । भक्तिगृहीतात् श्रद्धया अनुरागेण वा गृहीतात् वशीकृतात्, विषमात् क्रूरात् अनिष्टकारकात् यमादिति शेषः पुरुषस्य पुंसः जातावेकवचनम् । पुरुषस्येति उपलक्षणात् स्त्रीणामपि तेन मानवैरित्यर्थः जीवितव्यं प्राप्तव्यम् । यः यमः सर्वलोकं निखिलं जीवं मारयति नाशयति, तेन यमेन भक्तिगृहीतेनेति शेषः, जीवामः प्राणिमः वयं यमभक्ताः सर्वे इति शेषः । अन्यदा अन्यथा तु मृतिर्निश्चिता इति भावः । अत्र विषमात्

शिष्य । [विलोक्य ।] भद्र । न प्रवेष्टव्यम् ।

चर । हंहो बह्मण । कस्स एदं गेहम् ? (९)

शिष्य । अस्माकम् उपाध्यायस्य सुगृहीतनाम्नः (ग) आर्य्य चाणक्यस्य ।

चर । [विहस्य ।] हंहो बह्मण ! अत्तणकेरकस्स ज्जेव्व एदं धम्म भादुअस्स घरं होदि, ता देहि मे पवेसं, (घ) जाव दे उवज्झायस्स धम्मं उवदिसामि । (१०)

शिष्य । [सक्रोधम् ।] धिङ् मूर्ख ! किं भवान् अस्मदुपाध्यायादपि धर्मवित्तरः ? (ङ)

चर । हंहो बह्मण ! मा कुप्प; णहि खु सव्वो सव्वं जाणादि ता किम्पि दे उवज्झाओ जाणादि, किम्पि अह्मारिसा जाणन्ति । (११) (च)

शिष्य । [सक्रोधम् ।] मूर्ख ! सर्वज्ञताम् उपाध्यायस्य चोरयितु मिच्छसि ॥ (छ)

---

(९) अहो ब्राह्मण ! कस्येदं गृहम् ?

(१०) अहो ब्राह्मण ! आत्मीयस्यैव एतद् धर्मभ्रातुर्गृहं भवति, तस्माद् देहि मे प्रवेशं यावत् तवोपाध्यायस्य धर्ममुपदिशामि ।

(११) अहो ब्राह्मण ! मा कुप्य, न हि खलु सर्वः सर्वं जानाति, तत् किमपि ते उपाध्यायो जानाति, किमपि अस्मादृशा अपि जानन्ति ।

---

ख्यार० । "गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः । यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः । विरूपयोः सङ्घटना या च तद्विषमं मतम् ॥" इति दर्पणात् ॥ १८

(ख) यमपटं यमचित्रम् । गायामि गानं करिष्यामि ।

(ग) सुगृहीतं नाम यस्य स सुगृहीतनामा तस्य प्रातःस्मरणीयस्येत्यर्थः । "स सुगृहीतनामा स्यात् य प्रातः स्मर्य्यते बुधैः ।" इत्यमरदर्शनात् ।

(घ) आत्मीयस्य आत्मनो हितकरस्य । धर्मेण भ्रातुः धर्मभ्रातुः भ्रातृस्थानीयस्येत्यर्थः । प्रवेशं प्रवेशाधिकारम् ।

(ङ) अतिशयेन धर्मं वेत्तीति धर्मवित्तरः अत्यधिकधर्मज्ञ इत्यर्थः ।

(च) कुप्य क्रुध्य क्रोधं मा कुरु इत्यर्थः । अस्मादृशा मादृशाः ।

(छ) सर्वं जानाति वेत्ति इति सर्वज्ञः तस्य भावः तां सर्वज्ञतां सकलविज्ञताम् । चोरयितुम् अपहर्त्तुम् ।

चरः। हंहो बह्मण ! जइ दे उवज्झाओ सव्वं जाणादि, जाणादु दाव कस्स चन्दो अणभिमदो त्ति ? (१२) (ञ)

शिष्यः। मूर्ख ! किमनेन ज्ञातेन गुरोर्भविष्यति ?

चरः। हंहो बह्मण ! तुह उवज्झाओ ज्जेव जाणिस्सदि जं इमिणा जाणिदेण भोदि, उज्जुअबुद्धिआ तुमं दाव इत्तिअं जाणासि, कमलाणं चन्दो अणभिमदो त्ति (झ) एं पेक्ख,—(१३)

कमलाणं मनोहराणं वि रूआदो विसंवअइ सीलं।
संपुण्णमण्डलम्मि जाइं चन्दे विरुद्धाइं ॥ (१४)

चाण। [आकर्ण्य आत्मगतम्।] अये ! चन्द्रगुप्तात् अपरक्तान् पुरुषान् जानामि इति उपक्षिप्तम् अनेन। (ञ)

शिष्यः। मूर्ख ! किमिदमसम्बद्धम् एवमभिधीयते ? (ट)

चरः। हंहो बह्मण ! सुसंबद्धं ज्जेव एदं भवे। (१५) (ठ)

---

(१२) अहो ब्राह्मण ! यदि तवोपाध्यायः सर्वं जानाति, जानातु तावत् कस्य चन्द्रो ऽनभिमत इति।

(१३) अहो ब्राह्मण ! तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञातेन भवति, ऋजुबुद्धिस्त्वं तावद् एतावत् जानासि, कमलानां चन्द्रोऽनभिमत इति। ननु पश्य,—

(१४) कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम्।
सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि ॥

(१५) अहो ब्राह्मण ! सुसम्बद्धमेवैतत् भवेत्।

---

(ञ) न अभिप्रेतः अनभिप्रेतः अनभिमतः। चन्द्रः सोमः पक्षे महाराजचन्द्रगुप्तः।

(झ) ऋजुः सरला आक्रमन्त्रिं वेत्ति यावत् बुद्धिः मतिर्यस्य स ऋजुबुद्धिः सरलमति रित्यर्थः। एतावत् इयदेव। जानासि वेत्सि। कमलानां पद्मानां अनभिमतः अप्रियः।

कमलानामित्यादि। मनोहराणां सुन्दराणां कमलानां रूपात् आकारात् शील स्वभावः विसंवदति विवदते आकृतिसदृशं चरितं न अवलोक्यते। तदेव दर्शयति, सम्पूर्णं मण्डलं सकलं यस्य तस्मिन् सकलमण्डले लोकनयनाभिरामे इत्यर्थः। चन्द्रे सुधानिधौ यानि शीलानि विरुद्धानि विसदृशानि विरुद्धभावापन्नानीत्यर्थः॥ १४

(ञ) अपरक्तान् विरक्तान्। उपक्षिप्तं सूचितम्। अनेन चरेण।

(ट) इदं कथितं असम्बद्धं असंलग्नं पूर्वापरसम्बन्धरहितं इत्यर्थः। किं किमर्थम्। अभिधीयते कथ्यते।

(ठ) सुसम्बद्धं सुसङ्गतम्। एतत् मद्वाक्यम्।

शिष्यः। यदि किं स्यात्? (ङ)

चरः। जइ सुणन्तं जाणन्तं अ जणं लहे। (१६) (ढ)

चाण। [विलोक्य] भद्र! सुखं प्रविश, लप्स्यसे श्रोतारं ज्ञातारं च। (ण)

चरः। एसो पविसामि। [प्रविश्योपसृत्य च।] जेदु जेदु अज्जो। (१७) (त)

चाण। [विलोक्य आत्मगतम्।] कथं प्रभूतत्वात् (थ) कार्याणां कस्य परिज्ञाने नियुक्तः निपुणकः इति न ज्ञायते; आ ज्ञातम्, अयं कथमयं प्रकृतिचित्तपरिज्ञाने (द) नियुक्तो निपुणकः॥

[प्रकाशम्।] भद्र। स्वागतम्? उपविश्यताम्।

चरः। जं अज्जा आणवेदि त्ति। (१८) [भूमावुपविशति]।

चाण। भद्र! उपवर्णय इदानीं स्वनियोगवृत्तान्तम्। अपि वृषलमनुरक्ताः प्रकृतयः? (ध)

चरः। अध इं? (न) अज्जेण क्खु तेसु तेसु विराअकारणेसु परिहरिदेसु सुगहीदणामधेए देए चन्दउत्ते दिढं अणुरत्ताओ पइदिओ। किंतु

---

(१६) यदि शृण्वन्तं जानन्तञ्च जनं लभे। [सुणिदुं जाणन्तं इति पाठे—श्रोतुं ज्ञातारम् इति च]।

(१७) एष प्रविशामि। जयति जयति आर्य्यः।

(१८) यदार्य्य आज्ञापयतीति।

---

(ङ) किं स्यात् तदा, कीदृश्यामवस्थायामित्यर्थः।

(ढ) शृण्वन्तं आकर्णयन्तं श्रुतमवधारयन्तम्। जानन्तं अवगच्छन्तं ज्ञातं बोधयन्तमित्यर्थः। जनं प्रकृतवोद्धारमित्यर्थः।

(ण) सुखं अनायासेन। लप्स्यसे प्राप्स्यसि।

(त) उपसृत्य समीपं गत्वा। जयतु जययुक्तो भवतु, सर्वोत्कर्षेण वर्त्ततामित्यर्थः।

(थ) कार्याणां वेदितव्यविषयाणां प्रभूतत्वात् बहुत्वात्।

(द) प्रकृतिचित्तपरिज्ञाने—प्रकृतीनां प्रजानां चित्तानि मनांसि, अनुरक्तानि विरक्तानि वा यत्र करणानीत्यर्थः। तेषां परिज्ञाने सम्यक् ज्ञातुमित्यर्थः।

(ध) उपवर्णय बाहुल्येन कथय। स्वस्य नियोगः आदेशः तस्य वृत्तान्तं तं। आदिष्टकार्यस्य वार्तामित्यर्थः।

(न) अथ किम् इति पदं स्वीकारार्थमव्ययं। भवदुक्तं सत्यमित्यर्थः। तेषु तेषु

उण सन्ति अत्थ णअरे अमच्चरक्खसेण सह पढमं समुप्पण्णसिणेह-बहुमाणा तिण्णि पुरिसा, जे देवस्स चन्दसिरिणो सिरिं ण सहन्ति। (१९) (न)

चाण। [सक्रोधम्।] ननु वक्तव्यं स्वजीवितं न सहन्ते इति। भद्र! अपि ज्ञायन्ते नामधेयतः? (प)

चर। कधं अजाणिअणामधेआ अज्जस्स णिवेदिअन्ति? (फ)(२०)

चाण। तेन हि श्रोतुमिच्छामि।

चर। सुणादु अज्जो, पढमं दाव अज्जस्स रिउपक्खे बद्धपक्खवादो (ब) खवणओ (२१)

चाण। [सहर्षमात्मगतम्।] अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः। [प्रकाशम्] किंनामधेयो हि सः?

चर। जीवसिद्धी णाम। (२२)

चाण। अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणक इति कथम् अवगतं भवता? (भ)

---

(१९) अथ किम्? आर्येण खलु तेषु तेषु विरागकारणेषु परिहृतेषु सुगृहीतनाम्नि देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः। किन्तु पुनः सन्ति अत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः, ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते।

(२०) कथमज्ञातनामधेया आर्यस्य निवेद्यन्ते?

(२१) शृणोतु आर्यः, प्रथमं तावत् आर्यस्य रिपुपक्षे बद्धपक्षपातः क्षपणकः।

(२२) जीवसिद्धिर्नाम।

---

विशिष्टेषु इत्यर्थः। विरागकारणेषु असन्तोषहेतुषु। परिहृतेषु त्यक्तेषु, अपनीतेषु। सुगृहीतनामधेये प्रातःस्मरणीये। देवे प्रभौ। दृढं अत्यर्थम्। समुत्पन्नौ सञ्जातौ स्नेहः प्रेम बहुमानः अत्यादरश्च येषां ते तथोक्ताः। चन्द्रस्य श्रीरिव श्रीः यस्य तस्य चन्द्रश्रियः प्रभाढ्य-प्रकीर्तेः इत्यर्थः।

(प) चन्द्रगुप्तस्य श्रियो वर्द्धने आत्मनाशधृत्वात् स्वजीवनासहत्वं। ज्ञायन्ते परिचीयन्ते। नामधेयतः नाम्ना नामोच्चारणेनेत्यर्थः।

(फ) न ज्ञातं नामधेयं नाम येषां ते अज्ञातनामधेयाः। निवेद्यन्ते विज्ञाप्यन्ते। नामानि ज्ञात्वैव निवेदयामीत्यर्थः।

(ब) बद्धपक्षपातः सञ्जातानुराग इत्यर्थः।

(भ) कथं केन प्रकारेण। अवगतं विदितम्।

चर:। जेण सा अमच्चरक्खसेण पउत्ता विसकण्णआ देए पव्वदेस्सरे समावेसिदा। (२३) (म)

चाण। [स्वगतम्।] जीवसिद्धिरेष तावत् अस्मत्प्रणिधिः। [प्रकाशम्।] भद्र! अथ अपरः कः? (य)

चर:। अज्ज! अवरो क्खु अमच्चरक्खसस्स पिअवअस्सो काअत्थो सअडदासो णाम (२४)

चाण। [विहस्य आत्मगतम्।] कायस्थ इति लघ्वी मात्रा; तथापि न युक्तं प्राकृतमपि रिपुम् उपेक्षितुं तस्मिन् मया सुहृच्छद्मना सिद्धार्थको निक्षिप्तः (र) [प्रकाशम्।] भद्र! तृतीयं श्रोतुमिच्छामि।

चर:। तिदीओ वि अमच्चरक्खसस्स दुदीअं विअ हिअअं पुप्फउरवासी मणिआरसेट्ठी चन्दणदासो णाम, जस्स गेहे कलत्तं णासीकदुअ अमच्चरक्खसो णअरादो अवक्कन्तो। (२५) (ल)

चाण। [आत्मगतम्।] नूनं सुहृत्तमः, न हि अनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति [प्रकाशम्।] भद्र! चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते? (व)

---

(२३) येन सा अमात्यराक्षसेन प्रयुक्ता विषकन्यका देवे पर्वतेश्वरे समावेशिता।

(२४) आर्य! अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम।

(२५) तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव हृदयं पुष्पपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम, यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो नगरादपक्रान्तः।

---

(म) देवे प्रभौ। समावेशिता सम्प्रयुक्ता।

(य) अस्मत्प्रणिधिः मम गूढचरः। अपरः अन्यः कः किमाख्यः।

(र) लघ्वी हीना स्वल्पा मात्रा परिमाणं हीनबुद्धित्वादयं अपकर्त्तुमक्षमः अतो नास्ति उद्वेगकारणं। प्राकृतं साधारणं सामान्यमित्यर्थः। रिपुं शत्रुं। उपेक्षितुं परित्यक्तुं। युक्तं उचितं। सुहृच्छद्मना मित्रच्छलेन। निक्षिप्तः नियुक्तः।

(ल) द्वितीयं हृदयमिव अतिविश्वासपात्रं मित्रमित्यर्थः। मणिकारश्रेष्ठी अन्यासं न्यासं कृत्वा न्यासीकृत्य न्यासरूपेण निक्षिप्येत्यर्थः। अपक्रान्तः निर्गतः।

(व) अनात्मसदृशेषु आत्मना अतुल्येषु अविश्वस्तेषु इत्यर्थः। कलत्रं भार्य्यां "कलत्रं श्रोणिभार्य्ययो"रित्यमरः। न्यासीकृतं निक्षेपीकृतं। कथं केनोपायेनेत्यर्थः।

चर। अज्ज ! इयं अंगुलीअमुद्दा अज्जं अवगदत्थं करिस्सदि। (२६) [इति मुद्राम् अर्पयति।] (अ)

चाण। [मुद्रामवलोक्य गृहीत्वा, राक्षसस्य नाम वाचयित्वा च, सहर्षं स्वगतम्।] ननु राक्षस एव अस्मदङ्गुलिप्रणयी संवृत्त इति (ब) [प्रकाशम्।] भद्र अङ्गुलिमुद्राधिगमं विस्तरेण श्रोतुमिच्छामि। (स)

चर। सुणादु अज्जो, अत्थि दाव अहं अज्जेण पउरजणचरिददंसणे णिउत्तो. तदो परघरप्पवेसे परस्स अणासंकणीएण इमिणा जमपडेण आहिण्डन्तो (द) मणिआरसेट्ठिणो चन्दणदासस्स घरं पविट्ठोम्हि, तहिं जमपडअं पसारिअ पउत्तोम्हि गीदाइं" गाइदुं। (२७)(ह)

चाण। ततस्ततः ?

चर। "—तदो, एक्कादो ओवरकादो पञ्चवरिसदेसीओ पिअदंसणीअसरीराकिदी कुमारओ बालजणसुलहकोदूहलोप्फुल्लणअणजुअलओ णिक्कमिदुं पउत्तो, तदो 'हा णिग्गदो, हा णिग्गदो' त्ति सङ्कापरिग्गहणिवेदगुरुओ तस्स ज्जेव्व ओवरकस्स अब्भंतरे इत्थि-

---

(२६) आर्य। इयमङ्गुलिमुद्रा आर्यमवगतार्थं करिष्यति। (अज्ज अवगमइस्सदि इति पाठे—आर्यमवगमयिष्यति इति सं)

(२७) शृणोतु आर्यः, अस्ति तावदहमार्येण पौरजनचरितदर्शने नियुक्तः, ततः परगृहप्रवेशे परस्यानाशङ्कनीयेन अनेन यमपटेन आहिण्डमानो मणिकारश्रेष्ठिनः चन्दनदासस्य गृहं प्रविष्टोऽस्मि, तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम्।

---

(अ) अङ्गुलिमुद्रा नामाङ्कितम् अङ्गुरीयकम्। अवगतः अर्थः येन सः, तं अवगतार्थं विदितवृत्तान्तम्।

(ब) अस्माकं अङ्गुलिः अस्मदङ्गुलिः तत्र प्रणयः प्रेम अस्य अस्तीति अस्मदङ्गुलिप्रणयी। एतदङ्गुरीयकप्राप्त्या राक्षसः करस्थ एवेति मन्ये। इति भावः।

(स) अङ्गुलिमुद्रायाः अधिगमः प्राप्तिः तं तथोक्तम्। अङ्गुलिमुद्राप्राप्तिविवरणम्। विस्तरेण बाहुल्येन आमूलतः इत्यर्थः।

(द) पौरजनचरितदर्शने पुरवासिजनानुष्ठितकार्यावलोकने। नियुक्तः आदिष्टः। परगृहप्रवेशे अन्यभवनप्रवेशे। अनाशङ्कनीयेन असन्दिग्धेन इत्यर्थः। अनेन एतेन। आहिण्डमानः विचरन्।

(ह) ओवरकात् आच्छादनात् जवनिकाभ्यन्तरादित्यर्थः। पञ्चवर्षात् ईषदून पञ्चवर्षदेशीय। प्रिया दर्शनीया मनोहारिणी च शरीरस्य अवयवस्य आकृतिः संस्थानं यस्य सः प्रियदर्शनीयशरीराकृतिः। बालजनेन शिशुजनेन सुलभं यत् कौतूहलं रम्यवस्तुसमालोक

आजणस्स उत्थिदो महन्तो कलअलो (क)। तदो ईसिदुआरदेसदाविअमुहीए इत्थिआए सो कुमारओ णिक्कमन्तो ज्जेव णिब्भच्छिअ अवलम्बिदो कोमलाए बाहुलदाए। तस्सा अ कुमारसरोहसंभमप्पचलिदंगुलिदो करादो पुरिसंगुलिपरिणाहप्पमाणघडिआ (म) विअलिदा इअं अंगुलिमुद्दिआ देहलीबन्धम्मि णिपडिआ; ताए इत्थिआए अणवबुज्झन्तीए ज्जेव मम चलणपासं समागच्छिअ पणामणिहुआ णव-वहू व्व णिच्चला संवुत्ता, मए वि अमच्चरक्खसस्स णामंकिदेत्ति अज्जस्स पादमूलं पाविदा, ता एसो इमाए मुद्दाए आगमो त्ति। (२८) (ख)

---

(२८) ततश्च एकस्मात् आवरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारकः बालजनसुलभकौतूहलोत्फुल्लनयनयुगलको निष्क्रमितुं प्रवृत्तः, ततः 'हा निर्गतो हा निर्गतः' इति शङ्कापरिग्रहनिभृतगुरुकः (शङ्कापरिग्रहः निवेदन्त इति पाठे—शङ्कापरिग्रहं निवेदयन् इति च.) तस्यैव आवरकस्याभ्यन्तरे स्त्रीजनस्य उत्थितो महान् कलकलः। ततः ईषद्द्वारदेशदर्शितमुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भर्त्स्यावलम्बितः कोमलया बाहुलतया। तस्याश्च कुमारसंरोधसम्भ्रमप्रचलिताङ्गुलेः करात् पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेयमङ्गुलिमुद्रिका देहलीबन्धे निपतिता। तया स्त्रिया अनवबुध्यमानैव मम चरणपार्श्वं समागत्य प्रणामनिभृता नववधूरिव निश्चला संवृत्ता, मयाऽपि अमात्यराक्षसस्य नामाङ्कितेति आर्यस्य पादमूलं प्रापिता, तस्मात् एषोऽस्या मुद्राया आगम इति।

---

नेपथ्ये "रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्" इति वचनात्। तेन उत्फुल्लं विकसितं नयनयुगलं यस्य सः तथोक्तः। निष्क्रमितुं निर्गन्तुम्। शङ्काया. भावस्य परिग्रहेण निभृतं अत्यर्थं गुरु इति शङ्कापरिग्रहनिभृतगुरुकः। उत्थितः उद्गतः। महान् विपुलः।

(ख) ततः बालकनिर्गमनानन्तरम्। द्वारं एव देशः स्थानं द्वारदेशः, ईषत् स्वल्पं यथा तथा द्वारदेशे दर्शितं समर्पितं मुखं यया सा तथोक्ता तया। निष्क्रामन् बहिरागच्छन् निर्भर्त्स्य तिरस्कृत्य। कोमलया मृदुलया। अवलम्बितः गृहीतः। तस्याः स्त्रियः। कुमारस्य बालकस्य संरोधे नियन्त्रणे यः सम्भ्रमः त्वरा तेन प्रचलिता चञ्चला अङ्गुलिर्यस्य तस्मात् तथोक्तात्। करात् हस्तात्। पुरुषस्य अङ्गुलेः यः परिणाहः विशालता तस्य प्रमाणेन परिमाणेन घटिता निर्मिता अतएव विगलिता विच्युता, नारीकराङ्गुलौ कृशत्वादिति भावः। देहलीबन्धे गृहावग्रहण्या. बन्धे बन्धनस्थाने। अनवबुध्यमाना अनवगम्यमाना। अज्ञाता इत्यर्थः। चरणपार्श्वं पादसमीपं। प्रणामाय अभिवादनाय निभृता नियता। नववधूरिव नवपरिणीता रमणीव। निश्चला स्थिरा।

चाण। भद्र ! श्रुतम्, अपसर, नचिरादस्य परिश्रमस्यानुरूपं फलमधिगमिष्यसि। (ग)

चर। जं अज्जो आणवेदि त्ति। (२९) [ इति निष्क्रान्तः। ]

चाण। शार्ङ्गरव ! शार्ङ्गरव !

शिष्यः। [ प्रविश्य। ] उपाध्याय ! आज्ञापय।

चाण। वत्स ! मसीभाजनं पत्रञ्च उपानय।

शिष्यः। यत् आज्ञापयति उपाध्यायः। [ इति निष्क्रम्य पुनः प्रविश्य। ] उपाध्याय ! इदं मसीभाजनं पत्रञ्च।

चाण। [ गृहीत्वा स्वगतम्। ] किमत्राभिलिखामि ? अनेन खलु लेखेन राक्षसो जेतव्यः। (३०)

प्रतिहारी। [ प्रविश्य। ] जेदु जेदु अज्जो।

चाण। [ सहर्षमात्मगतम्। ] गृहीतोऽयं जयशब्दः। [ प्रकाशम्। ] शोणोत्तरे ! किम् आगमनप्रयोजनम् ?

प्रती। अज्ज ! कमलमउलाआरमञ्जलिं सीसे णिवेसिअ देवो चन्दसिरी अज्जं विण्णवेदि। इच्छामि अहं अज्जेण अब्भणुण्णादो देवस्स पव्वदेसरस्स पारलोइअं कादुं, तेण अ धारिदपुव्वाइं आभरणाइं गुणवन्ताणं बह्मणाणं पडिवादेमि त्ति। (३१) (घ)

---

(२९) यदार्य आज्ञापयति इति।

(३०) जयति जयति आर्यः।

(३१) आर्य ! कमलमुकुलाकारमञ्जलिं शीर्षे निवेश्य देवश्चन्द्रश्रीरार्यं विज्ञापयति। इच्छाम्यहमार्येणाभ्यनुज्ञातो देवस्य पर्वतेश्वरस्य पारलौकिकं कर्तुं, तेन च धारितपूर्वाणि आभरणानि गुणवतां ब्राह्मणानां प्रतिपादयामीति।

---

महता जाता। नामाङ्किता नामयुक्ता। आर्यस्य पूजनीयस्य भवतः इत्यर्थः। पाद मूलं पादान्तिकं प्रापिता नीता। "एवं अयं एवम्प्रकारः इत्यर्थः। आगमः लाभः।

(ग) अनुरूपं सदृशं उपयुक्तं। फलं पारितोषिकरूपं धनमित्यर्थः।

(घ) कमलमुकुलस्य कमलकलिकाया आकार इव आकारो यस्य तं तथोक्तं। शीर्षे मस्तके। "उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः। निवेश्य संस्थाप्य अभ्यनुज्ञातः आदिष्टः अनुमतिं प्राप्तः। परलोकः प्रयोजनमस्य इति पारलौकिकं और्द्ध्वदैहिकं श्राद्धदानादिकार्यमित्यर्थः। पूर्वं धारितानि धारितपूर्वाणि प्राक् परिहितानीत्यर्थः। आभरणानि अलङ्कारान्। गुणवतां विद्याविनयतपस्यादियुक्तानां। प्रतिपादयामि ददामि।

चाण। [सहर्षमात्मगतम्।] साधु वृषल! साधु!! ममैव हृदयेन सह सम्मन्त्र्य सन्दिष्टवानसि (ङ) [प्रकाशम्।] शोणोत्तरे! उच्यताम् अस्मद्वचनाद् वृषलः, साधु वत्स! साधु, अभिज्ञः खल्वसि लोकव्यवहाराणां, तदनुष्ठीयताम् आत्मनोऽभिप्रायः; किन्तु पर्वतेश्वरधृतपूर्वाणि भूषणानि गुणवन्ति गुणवद्भ्य एव ब्राह्मणेभ्यः प्रतिपादनीयानि, तद् एषोऽहं स्वयं परीक्षितगुणान् ब्राह्मणान् प्रेषयामि। (च)

प्रती। जं अज्जो आणवेदि त्ति (२२) [निष्क्रान्ता।]

चाण। शार्ङ्गरव! शार्ङ्गरव! उच्यन्ताम् अस्मद्वचनात् विश्वावसुप्रभृतयः त्रयो भ्रातरः, यथा वृषलात् प्रतिगृह्याभरणानि भवद्भिः अहं द्रष्टव्य इति। (छ)

शिष्य। यद् आज्ञापयति उपाध्यायः। [इति निष्क्रान्तः।]

चाण। [स्वगतम्।] उत्तरोऽयं लेखार्थः, पूर्वः कतमोऽस्तु। [विचिन्त्य।] आः ज्ञातं, उपलब्धवानस्मि प्रणिधिभ्यः, यथा तस्य म्लेच्छराजलोकमध्यात् प्रधानतमाः पञ्च राजानः परया भक्त्या राक्षसमनुवर्त्तन्ते। (ज) ते यथा,—

---

(२२) यद् आर्य्य आज्ञापयतीति।

---

(ङ) हृदयेन मनःकरणेन। सम्मन्त्र्य मन्त्रयित्वा। सन्दिष्टवान् वाचिकं प्रेषितवान्।

(च) अभिज्ञः विशेषज्ञः। लोकानां व्यवहाराः समाचाराः, तेषां। आत्मनः स्वस्य। अभिप्रायः मनोरथः तद्गतो भाव इत्यर्थः। पर्व्वतेश्वरधृतपूर्व्वाणि पर्व्वतेश्वरेण पूर्व्वं धृतानि। भूषणानि आभरणानि। गुणवन्ति, बहुमूल्यवैदूर्य्यबाहुल्यादिगुणयुक्तानीत्यर्थः। अतएव गुणवद्भ्यः विद्याविनयदयादाक्षिण्यादियुक्तेभ्यः। प्रतिपादनीयानि समर्पणीयानि देयानि इत्यर्थः। परीक्षिताः विशेषेण विज्ञाता गुणाः येषां ते तान्। प्रेषयामि प्रेषयामि प्रेषयिष्यामीत्यर्थः।

(छ) उच्यन्तां कथ्यन्तां। अस्मद्वचनात् मदाज्ञानुसारेणेत्यर्थः। वृषलात् चन्द्रगुप्तात्। प्रतिगृह्य आदाय। द्रष्टव्यः अवलोकयितव्यः।

(ज) अथ अलङ्कारस्य लेखार्थे पत्रिकाविषये उत्तरः अन्तिमः शेषवर्त्तीति यावत्। पूर्व्वः प्रथमांशः। कतमः किंरूपकः अस्तु भवतु। उपलब्धवान् ज्ञातवान्। प्रणिधिभ्यः गूढचरेभ्यः। म्लेच्छराजलोकस्य म्लेच्छाधिपसमूहस्य प्रधानतमाः श्रेष्ठाः परया अतिशयितया भक्त्या अनुवर्त्तन्ते सेवन्ते।

सिद्धार्थकः। [लेखहस्तः प्रविश्य।] जेदु जेदु अज्जो। अज्ज! अअं सो सअडदासेण सहत्थलिहिदो लेहः (२३) (ठ)

चाण। [गृहीत्वा निरीक्ष्य।] अहो दर्शनीयता अक्षराणाम्! [इ अनुवाच्य।] भद्र! अनया मुद्रया मुद्रय एनम्। (ड)

सिद्धा। जं अज्जो आणवेदि त्ति। [तथा कृत्वा।] अज्ज! अअं सो मुद्दिदो लेहो, ता आणवेदु अज्जो किं अवरं अणुचिट्ठीदु त्ति। (२४)

चाण। भद्र! कस्मिंश्चित् आत्मनानुष्ठेये कर्मणि त्वां व्यापारयितुम् इच्छामि। (ढ)

सिद्धा। [सहर्षम्।] अज्ज! अणुग्गहीदोम्हि, ता आणवेदु अज्जो किं इमिणा दासजणेण अज्जस्स अणुचिट्ठिदव्वं।(२५) (ण)

चाण। भद्र! प्रथमं तावत् वध्यस्थानं गत्वा घातकाः सरोषं दक्षिणाक्षिसङ्कोचसंज्ञां ग्राहयितव्याः, ततस्तेषु गृहीतसंज्ञेषु भयाप देशात् इतस्ततः प्रद्रुतेषु शकटदासो वध्यस्थानात् अपनीय राक्षसं प्रापयितव्यः, तस्माच्च सुहृत्प्राणरक्षणपरितुष्टात् पारितोषिकं ग्राह्यं, राक्षस एव कञ्चित् कालं सेवितव्यः, ततः प्रत्यासन्नेषु परेषु त्वया प्रयोजनमिदम् अनुष्ठेयम्। (त) [कर्णे एवमेव।]

---

(२३) जयति जयति आर्यः। आर्य! अयं स शकटदासेन स्वहस्तलिखितो लेख

(२४) यद् आर्य आज्ञापयतीति। आर्य! अयं स मुद्रितो लेखः, तत् आज्ञापयतु आर्य किमपरमनुष्ठीयतामिति।

(२५) आर्य! अनुगृहीतोऽस्मि, तदाज्ञापयतु आर्यः, किमनेन दासजनेन आर्यस्य अनुष्ठातव्यम्।

---

(ठ) लेखः हस्ते यस्य स लेखहस्तः, गृहीतपत्रिक इत्यर्थः। स्वहस्तेन निजहस्तेन न तु आदिष्टप्रतिनिधिना, लिखितः।

(ड) दर्शनीयता रामणीयकम्। अनया राक्षसनामाङ्कितया मुद्रया मुद्रय अन्य, मुद्रितं कुरु इत्यर्थः।

(ढ) कस्मिंश्चित् एकस्मिन् आत्मना स्वेन न तु प्रतिनिधिना तथात्वे मन्त्रगुप्तिर्न स्यात्, अनुष्ठेये अनुष्ठानयोग्ये सम्पाद्ये निजकार्ये इत्यर्थः। व्यापारयितुं नियोक्तुं। शिष्यस्य अतिविश्वस्तत्वात्।

(ण) अनुगृहीतः कृतार्थः। दासजनेन सेवकेनेत्यर्थः अनुष्ठातव्यं सम्पादयितव्यं करणीयमिति यावत्।

(त) प्रथमं आदौ। वध्यस्थानं निधनस्थानं, श्मशानमिति यावत्। सरोषं सक्रोधं।

सिद्धा। जं अज्जो आणवेदि। (२६)

चाण। शार्ङ्गरव! शार्ङ्गरव!।

शिष्यः। [प्रविश्य] उपाध्याय! आज्ञापय।

चाण। उच्यतां मद्वचनात् कालपाशिको दण्डपाशिकश्च, यथा वृषलः समाज्ञापयति, य एष क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तो विषकन्यया पर्वतेश्वरं घातितवान्, स एनमेव दोषं प्रख्याप्य सनिकारं नगराद् निर्वास्यताम् इति। (थ)

शिष्यः। यद् आज्ञापयति उपाध्यायः। [इति परिक्रामति।]

चाण। वत्स! तिष्ठ तिष्ठ, योऽयमपरः कायस्थः शकटदासो नाम राक्षसप्रयुक्तो नित्यम् अस्मच्छरीरम् अभिद्रोग्धुमिह प्रयतते, स चापि एनं दोषं प्रख्याप्य, शूलमारोप्यतां गृहजनश्च अस्य बन्धनागारे प्रवेश्यतामिति। (द)

शिष्यः। यद् आज्ञापयति उपाध्यायः। [इति निष्क्रान्तः।]

चाण। [चिन्तां नाटयित्वा स्वगतम्।] अपि नाम दुरात्मा राक्षसो गृह्येत? (ध)

सिद्धा। अज्ज! गहीदो। (२७)

---

(२६) यदार्य आज्ञापयति।
(२७) आर्य! गृहीतः।

---

द्विपस्य यथा सङ्कीर्ण. सङ्कीर्णता एव सज्जा सङ्केत ताम्। तेषु घातकेषु। गृहीता अवगता इत्यर्थः। सज्जा सङ्केतः यैः तेषु गृहीतसज्ञेषु सङ्केतितार्थं बुध्यमानेषु इत्यर्थः। भयापदेशात् भीतिव्याजेन। इतस्ततः समन्तात्। प्रद्रुतेषु धावमानेषु पलायितेषु इत्यर्थः। अपनीय अपसार्य। सुहृद मित्रस्य प्राणानां रक्षणेन परितुष्टात् सन्तुष्टात्। पारितोषिकं पुरस्कारः। याच्यं ग्रहीतव्यं। सेवितव्य उपासितव्यः। प्रत्यासन्नेषु समीपवर्त्तिषु।

(थ) मद्वचनात् मम वाक्यानुसारेणेत्यर्थः। वृषल चन्द्रगुप्तः। समाज्ञापयति समादिशति। क्षपणकः जैनसन्न्यासी। राक्षसप्रयुक्तः राक्षसेन आदिष्ट इत्यर्थः। स जीवसिद्धिः। एनं पूर्वोक्तम्। प्रख्याप्य उद्घोष्य। निकारेण परिभवेन अगौरवेणेति यावत् सह वर्त्तमानं यथा तथा।

(द) अस्माकं शरीरं अस्मच्छरीरम्। अभिद्रोग्धुं हिंसितुं। प्रयतते चेष्टते। स शकटदासः। अस्य शकटदासस्य। गृहजनः पत्न्यादिपरिवारवर्गः।

(ध) गृह्येत वशीक्रियेत मया इति शेषः।

चाण। [सहर्षमात्मगतम्।] हन्त गृहीतो राक्षस। [प्रकाशम्।] भद्र। कोऽयं गृहीत ?

सिद्धा। गहीदो मए अज्जस्स सन्देसो, ता गमिस्सं अहं कज्जसिद्धीए (१८) (न)

चाण। [साङ्गुलीमुद्रं नियमयित्वा।] भद्र। सिद्धार्थक। गम्यताम् अस्तु ते कार्य्यसिद्धि।

सिद्धा। जं अज्जो आणवेदि त्ति। (१९) [प्रणम्य निष्क्रान्तः।]

शिष्य। [प्रविश्य।] उपाध्याय। कालपाशिको दण्डपाशिकश्च उपाध्याय विज्ञापयतः। इदम् अनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनमिति। (प)

चाण। शोभनम्। वत्स। मणिकारश्रेष्ठिनं चन्दनदासम् इदानीं द्रष्टुमिच्छामि। (फ)

शिष्य। यद् आज्ञापयति उपाध्याय। [इति निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य।] इत इतः श्रेष्ठिन्। (ब)

चन्दनदास। [स्वगतम्।]—

चाणक्कम्मि अकरुणे सहसा सद्दाविदस्स लोअस्स।
णिद्दोसस्स वि सङ्का किं उण जाददोसस्स ? ॥ २१

---

(१८) गृहीतो मया आर्य्यस्य सन्देशः तद्गमिष्यामि अहं कार्य्यसिद्ध्यै।

(१९) यदार्य्य आज्ञापयतीति।

---

(न) कार्य्यस्य सिद्धि साधनाय सर्वैः।

(प) विज्ञापयतः निवेदयतः। देवस्य प्रभोः। शासनं आज्ञा जीवसिद्धे निर्वासनकर इति यावत्। अनुष्ठीयते सम्पाद्यते

(फ) शोभन.मणि. श्रेष्ठिन.नैरिति.चन्द.न.

(ब) इत इत अस्मा निर्गीच्यर्थं — श्रेष्ठिन् वणिक्।

चाणक्यस्मिन्नित्यादि। सहसा सपदि आह्वायितस्य आहूतस्य चाणक्येनेति शेषः निर्दोषस्य निरपराधस्यापि लोकस्य जनस्य अस्मिन् अकरुणे दयारहिते दण्डे इत्यर्थः चाणक्ये शङ्का भयं भवति। जातदोषस्य सापराधस्य ममतिरामे किं किं वक्तव्यं शङ्का वर्त्तत एव ॥ २१

ता भणिदा मए धणसेणप्पमुहा णिअणिवेससंठिआ जधा कदावि चाणक्कहदओ गेहं मे विचिणावेदि, ता अवहिता णिव्वहध भट्टिणो अमच्चरक्खसस्स घरअणं, मह दाव जं होदि तं होदु त्ति । (भ) (४०)

शिष्य । भोः श्रेष्ठिन् ! इत इतः ।

चन्द । अज्ज आगदह्मि । (४१) [ उभौ परिक्रामतः । ]

शिष्य । उपाध्याय ! अयं श्रेष्ठी चन्दनदासः ।

चन्द । [ उपसृत्य । ] जेदु जेदु अज्जो । (४२)

चाण । [ नाट्येन अवलोक्य । ] भोः श्रेष्ठिन् ! स्वागतम् ? इदमासनम् आस्यताम् । (म)

चन्द । [ प्रणम्य । ] किं ण जाणादि अज्जो, जधा अणुचिदो उअआरो परिहवादोवि महन्तं दुःखमुप्पादेदि, ता इध ज्जेव्व अहं उचिदाए भूमीए उवविसामि । (४३) (य)

चाण । भोः श्रेष्ठिन् ! मा मा एवम्, उचितमेवैतत् अस्मद्विधैः सह भवतः; तदुपविश्यताम् आसन एव । (र)

---

(४०) चाणक्येऽस्मिन् पकरुणे सहसा प्रस्थापितस्य धीमतः ।
वर्द्धते निर्दोषस्यापि शङ्का किं ज्ञातदोषस्य ? ॥

तद्भणिता मया धनसेनप्रमुखा निजनिवेशसंस्थिता, यथा कदापि चाणक्यहतको गेहं मे विचिनोति तदवहिता निर्वहत भर्तुः अमात्यराक्षसस्य गृहजनं, मम तावत् यद्भवति तद्भवतु इति ।

(४१) अयमागतोऽस्मि ।

(४२) जयतु जयतु आर्यः ।

(४३) किं न जानाति आर्यः, यथाऽनुचित उपचारः, परिभवादपि महद् दुःखमुत्पादयति इह एव अहम् उचितायां भूमौ उपविशामि ।

---

(भ) भणिता उक्ताः । धनसेनप्रमुखाः धनसेनप्रभृतयः । निजनिवेशसंस्थिताः निजभवनमाश्रिताः । विचिनोति अनुसन्धास्यति । अवहिताः सावधानाः । निर्वहत रक्षत ।

(म) स्वागतमिति । कुशलप्रश्ने अव्ययम् । शुभागमनं कच्चिदित्यर्थः । इदं पुरोवर्ति । आस्यताम् उपविश्यतां त्वयेति शेषः ।

(य) अनुचितः अयोग्यः अत्यधिक इत्यर्थः । उपचारः समादरः सम्मान इत्यर्थः । परिभवात् तिरस्कारात् । महत् अत्यधिकं । उत्पादयति जनयति । उचितायां मदुपयुक्तायां । भूमौ स्थण्डिले ।

(र) एतत् विनयप्रदर्शनं । उचितमेव कर्त्तव्यमेवेत्यर्थः । अस्मद्विधैः मादृशैः गुरुभिः ।

चन्द। [स्वगतम्।] उपलक्खिदम् अणेण किम्पि। (ल) [प्रकाशम्।] जं अज्जो आणवेदि त्ति। (४४) [उपविष्टः]

चाण। भोः श्रेष्ठिन्! चन्दनदास! अपि प्रचीयन्ते संव्य-हाराणां लाभा वः? (व)

चन्द। अज्ज! अध इं; अज्जस्स पसाएण अखण्डिदा वाणिज्जा। (४५) (श)

चाण। भोः श्रेष्ठिन्! अपि कदाचित् चन्द्रगुप्तदोषा अतिक्रान्त-पार्थिवगुणान् अधुना स्मारयन्ति प्रकृतीः? (ष)

चन्द। [कर्णौ पिधाय।] सन्तं पावं। सारअणिसासमुग्गदेण वि-पुण्णिमाचन्देण चन्दसिरिणा अधिअं णंदन्ति पकिदिओ। (४६) (स)

चाण। भोः श्रेष्ठिन्! यदि एवं प्रीताभ्यः प्रकृतिभ्यः प्रि-मिच्छन्ति राजान! (ह)

चन्द। आणवेदु अज्जो। किं कित्तिअं वा अत्थजादं इमा-जणादो इच्छीअदि त्ति। (४७) (क्ष)

---

(४४) उपलक्षितमनेन किमपि। यदार्य आज्ञापयति इति।

(४५) आर्य! अथ किम्, आर्यस्य प्रसादेन अखण्डिता मे वाणिज्या।

(४६) शान्तं पापं, शारदनिशासमुद्गतेन इव पूर्णिमाचन्द्रेण चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः।

(४७) आज्ञापयतु आर्यः। किं कियद्वा अर्थजातमस्माज्जनादिष्यते इति।

---

(ल) अनेन चाणक्येन। किमपि अपराधादिकं। उपलक्षितं विज्ञातम्।

(व) प्रचीयन्ते वर्द्धन्ते। संव्यवहाराणां क्रयविक्रयव्यापाराणाम्।

(श) अथ किमिति स्वीकारसूचकमव्ययपदं। अखण्डिता परिपूर्णा।

(ष) चन्द्रगुप्तस्य दोषा अवगुणाः। अतिक्रान्ता समतीता ये पार्थिवा नन्दा, ते-गुणा दयादाक्षिण्यसौजन्यादयः तान् तथोक्तान्। प्रकृतीरित्यत्र कर्मणि द्वित्वम्।

(स) पिधाय आच्छाद्य, पक्षे अपिधाय। अपि पूर्वकात् दधातेर्ल्यपि रूपं। शान्तं पा-पमशुभमित्यर्थः। शारदनिशायां शरत्कालीनरात्रौ समुद्गतेन समुदितेन। चन्द्रश्रि-चन्द्रगुप्तेन। अधिकं अत्यर्थं यथा तथा।

(ह) यद्येवं यदि प्रकृतयः सत्यमेव सन्तुष्टा इत्यर्थः।

(क्ष) किं किन्नामकं। कियत् किम्परिमाणं। अर्थजातं वस्तुजातम्।

चाण। भोः श्रेष्ठिन्! चन्द्रगुप्तराज्यमिदं, न नन्दराज्यं, यतो नन्दस्य एवार्थरुचेः अर्थसम्बन्धः प्रीतिमुत्पादयति, चन्द्रगुप्तस्य तु भवताम् अपरिक्लेश एव। (ख)

चन्द। [सहर्षम्।] अज्ज! अणुग्गहीदोह्मि। (४८)

चाण। भोः श्रेष्ठिन्! स च अपरिक्लेशः कथम् आविर्भवतीति ननु प्रष्टव्याः स्मो भवता? (ग)

चन्द। आणवेदु अज्जो। (४९)

चाण। सङ्क्षेपतो राजनि अविरुद्धाभिर्वृत्तिभिः वर्त्तितव्यम्। (घ)

चन्द। अज्ज! को उण अधण्णो, अज्जेण अवगच्छीअदि? (ङ) (५०)

चाण। भवान् एव तावत् प्रथमः। (च)

चन्द। [कर्णौ पिधाय।] सन्तं पावं सन्तं पावं, कीदिसो तिणाणं अग्गिणा सह विरोहो? (५१)

चाण। अयम् ईदृशो विरोधो, यत् त्वम् अद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहम् अभिनीय रक्षसि। (छ)

---

(४८) आर्य! अनुगृहीतोऽस्मि।

(४९) आज्ञापयतु आर्यः।

(५०) आर्य! कः पुनरधन्य आर्येणावगम्यते? ["को राअविरुद्धो त्ति" इति पाठे—को राजविरुद्धः।

(५१) शान्तं पापं, शान्तं पापं, कीदृशस्तृणानामग्निना सह विरोधः?

---

(ख) अर्थे वस्तुनि रुचिरभिलाषो यस्य तस्य अर्थरुचेः अर्थलोलुपस्य। अर्थसम्बन्धः धनव्यवहार इति यावत्। प्रीतिं परितोषं। भवतां भवादृशानां प्रजानामित्यर्थः। अपरिक्लेश दुःखाभावः सुखावस्थानमिति यावत्, प्रीतिमुत्पादयतीत्यनेन सम्बन्धः।

(ग) अपरिक्लेशः दुःखाभावः। कथं केन प्रकारेण। आविर्भवति जायते। ध्व. वयमितिशेष। प्रष्टव्याः जिज्ञासितव्याः।

(घ) संक्षेपतः समासतः। राजनि नरपतौ। अविरुद्धाभिः अनुकूलाभिः हितकरीभिरित्यर्थः। वृत्तिभिर्व्यवहारैः।

(ङ) अधन्यः पापात्मा, राजद्रोहीत्यर्थः। "सुकृती पुण्यवान् धन्यः" इत्यमरः।

(च) प्रथमः अधन्यइत्यर्थः।

(छ) ईदृशः एवमाकारः स्पष्टः। राज्ञः अपथ्यं अनिष्टं करोति इति तस्य राजा

चन्द। अज्ज। अलीअं एदं, केणावि अणज्जेण अज्जस्स णिवेदिदं। (ञ) (५२)

चाण। भोः श्रेष्ठिन्! अलम् आशङ्कया, भीताः पूर्वराजपुरुषाः पौराणाम् अनिच्छताम् अपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति, ततः तत्प्रच्छादनम् एव दोषम् उत्पादयति। (झ)

चन्द। एव्वं णेदं। तस्सिं समये आसी अह्मघरे अमच्चरक्खसस्स घरअणो। (५३)

चाण। प्रथमम् अनृतम्, इदानीम् आसीदिति परस्परविरोधिनी वचने। (ञ)

चन्द। एत्तिअं ज्जेव अत्थि मे वाआच्छलं। (५४) (ट)

चाण। भोः श्रेष्ठिन्। चन्द्रगुप्ते राजनि न परिग्रहः छलानां, तत् समर्पय राक्षसस्य गृहजनम् अच्छलं भवतु भवतः। (ठ)

चन्द। अज्ज। णं विण्णवेमि, तस्सिं समये आसी अह्मघरे अमच्चरक्खसस्स घरअणो त्ति। (५५)

चाण। अथ इदानीं क्व गतः?

---

(५२) आर्य। अलीकमेतत्, केनापि अनार्येण आर्यस्य निवेदितम्।

(५३) एवं नु इदम्। तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन

(५४) एतावदेवास्ति मे वाक्छलम्।

(५५) आर्य। ननु विज्ञापयामि, तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनम् इति।

---

मध्यकार्ये राज्ञ अनिष्टकारित्व। प्रच्छन्नं प्रवादविषयं। अभिनीय प्रापय। एतानि भावयसि।

(ञ) अलीकं मिथ्या। एतत् राक्षसगृहजनगोपनम्।

(झ) आशङ्कया भयेन। भीताः शङ्किताः। अनिच्छताम् अनभिलषताम् इत्यादि कुर्वतामित्यर्थः। निक्षिप्य न्यासीकृत्य। तत्प्रच्छादनं तस्य गोपनम्।

(ञ) परस्परं विरुद्धे इति परस्परविरोधिनी, वचने द्वे वाक्ये।

(ट) वाक्छलं वाक्प्रपञ्चम्।

(ठ) राजनि शासितरीत्यर्थः। छलानां कपटव्यवहाराणां परिग्रहः स्वीकारः। अच्छलं छलाभाव।

चन्द । ण जाणामि कहिं गदो त्ति (५६)

चाण । [ स्मितं कृत्वा । ] कथं न ज्ञायते नाम ? भो श्रेष्ठिन् ! शिरसि फणी, दूरे तत्प्रतीकारः ; अन्यच्च नन्दमिव विष्णुगुप्त—"। (ड)

[ इति अर्द्धोक्ते लज्जां नाटयति । ]

चन्द । [ स्वगतम् । ]—

उवरि घणघणरडिअं दूरे दइआ किमेदमावडिअम् ।
हिमवदि दिव्वोसहिओ सीसे सप्पो समाविट्ठो ॥ २२

चाण । "—चन्द्रगुप्तम् अमात्यराक्षसः समुच्छेत्स्यतीति मैवं मंस्था (ढ) । पश्य,—

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभिः
नन्दे जीवति, या तदा न गमिता स्थैर्य्यं चलन्ती मुहुः ।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्,
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्त्तुं व्यवस्येत् पृथक् ? ॥ २३

अपिच [ आस्वादितेत्यादि प्रागुक्तं पठति । ]

---

( ५६ ) न जानामि कुत्र गत इति ।

( २२ ) उपरि घन घनरटित दूरे दयिता किमिदमापतितम् ।
" हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः ॥

---

( ड ) शिरसि फणी मस्तकोपरि सर्पः सर्पवत् मारात्मकः राजदण्ड इत्यर्थः । तत्प्रतीकारः तन्निवारणोपायः दूरे विप्रकृष्टे स्थाने । विष्णुगुप्तः चाणक्यः ।

उपरीत्यादि । उपरि ऊर्द्धे घनं निविडं घनस्य मेघस्य रटितं शब्दः श्रूयते इति शेषः । दयिता प्रिया पत्नीत्यर्थः यावत्, दूरे वर्त्तते इति शेषः । एतत् इदं मेघगर्जनादिकं किं आपतितं समुपस्थितं विरहिभिर्जलदागमः दुःसहः इति भावः । दिव्या उत्कृष्टतमा औषधयः मेघज्योतिःप्रकाशोद्भासनतानिविशेषाः हिमवति हिमालये तिष्ठन्तीति शेषः सर्पस्तु शीर्षे मस्तके समाविष्टः समापतितः । सुतरां प्रतीकारः सर्वथैवासम्भव । अत्र अप्रस्तुतप्रशंसालङ्कारः ॥ २२

( ढ ) समुच्छेत्स्यति समुन्मूलयिष्यति । मा मंस्थाः मनसि मा कुरु इत्यर्थः ।

विक्रान्तैरित्यादि । नन्दे नरपतौ जीवति विद्यमाने सति मुहुः पुनः पुनः चलन्ती मत्कृताभियोगवशात् अप्रतिष्ठिता इति यावत् । या श्रीः राज्यलक्ष्मीः विक्रान्तैः पराक्रमशालिभिः नयशालिभिर्नीतिमद्भिः नीतिज्ञानकुशलैरित्यर्थः सुसचिवैः अनुरक्तामात्यैः सर्वगुप्तप्रभृतिभिः । वक्रनासादिभिः पुरुषसिंहैः स्थैर्य्यं अचाञ्चल्यं प्रतिष्ठामित्यर्थः न गमिता न प्रापिता । अधुना एकत्वं स्थैर्य्यमित्यर्थः उपागतां प्राप्तां द्युतिमिव आह्लादकरीं कान्तिमिव

चन्द। [स्वगतम्] फलेण सम्पादिदं सोहदि दे विकत्थिदं (५७) (प)

[नेपथ्ये उत्सारणा क्रियते।] (त)

चाण। शार्ङ्गरव ! ज्ञायतां किमेतत्। (थ)

शिष्य। यदाज्ञापयति उपाध्यायः। [इति निष्क्रम्य, पुनः प्रविश्य।] उपाध्याय ! एष राज्ञः चन्द्रगुप्तस्य आज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरात् निर्वास्यते। (द)

चाण। क्षपणक ! अहह !! अथवा—अनुभवतु राजापथ्यकारित्वस्य फलम्। भोः श्रेष्ठिन् चन्दनदास ! एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, तत् क्रियतां पथ्यं सुहृद्वचः, समर्प्यतां राक्षसगृहजनः, चिरमनुभूयन्तां विविधा राजप्रसादाः। (ध)

चन्द। णत्थि मे गेहे अमच्चरक्खसघरअणो। (५८)

[ततो नेपथ्ये कलकलः।]

चाण। शार्ङ्गरव ! ज्ञायतां पुनः किमेतत्।

शिष्य। यदाज्ञापयति उपाध्यायः। [इति निष्क्रम्य, पुनः प्रविश्य।] उपाध्याय ! असौ राजाज्ञया राजापथ्यकारी कायस्थः शकटदासः शूलम् आरोपयितुं नीयते।

---

(५७) फलेन सम्पादितं शोभते ते विकत्थितम्।

(५८) नास्ति मे गेहे अमात्यराक्षसगृहजनः।

---

जगत् स्थिरं प्रसादयन्तौ समुल्लासयन्तौ तां प्रियं चन्द्रात् सुधांशौ इव चन्द्रगुप्तनृपते पृथक् विच्युतां कर्तुं विभागं क व्यवसेत् प्रयतेत, न कोऽपीत्यर्थः। अत्र शार्दूलविक्रीडितं वृत्तं। उपमालङ्कारः॥ २२

(प) विकत्थितं आत्मप्रशंसनं इत्यर्थः।

(त) उत्सारणा दिदृक्षूणां लोकानां सम्मर्दनिवारणाय अपसारणा।

(थ) एतत् उत्सारणं किं किमर्थं क्रियते इति शेषः।

(द) क्षपणकः क्षपणकेन। राजापथ्यकारी राज्ञः अनिष्टकारकः राजद्रोही इत्यर्थः। सनिकारं सापमानं। निर्वास्यते दूरीक्रियते इत्यर्थः।

(ध) अहह इति खेदसूचकमव्ययं। राजापथ्यकारित्वस्य राजद्रोहितायाः। फलं परिणामं। तीक्ष्णः कठोरः दण्डः शासनं यस्य सः तीक्ष्णदण्डः इत्यर्थः। तत् अतएव। पथ्यं हितकरं। सुहृद्वचः आप्तवाक्यं। चिरं दीर्घकालं व्याप्य। विविधाः नानाविधाः। राजप्रसादाः राज्ञः अनुग्रहाः भूमिभूषणगौरवादिलाभरूपाः।

चाण। स्वकर्मफलभाक् भवतु। भोः श्रेष्ठिन्! एवमयं राजा पथ्यकारिषु तीक्ष्णदण्डो राजा, न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः, तद् रक्ष परकलत्रेण आत्मनः कलत्रं जीवितञ्च। (न)

चन्द। अज्ज! किं मे भअं दंसेसि? सन्तं वि गेहे अमच्चरक्खसस्स घरअणं ण समप्पेमि, किं उण असन्तं। (प) (८९)

चाण। चन्दनदास! एष ते निश्चयः?

चन्द। बाढ़ं, एसो मे थिरो णिच्छओ। (फ) (९०)

चाण। [स्वगतम्।] साधु चन्दनदास! साधु!—

सुलभेष्वर्थलाभेषु परसंवेदने जनः।
क इदं दुष्करं कुर्यादिदानीं शिविना विना? ॥ २४

[प्रकाशम्।] चन्दनदास! एष ते निश्चयः? (ब)

चन्द। बाढ़ं।

चाण। [सक्रोधम्।] दुरात्मन् दुष्टवणिक्! अनुभूयतां तर्हि राजकोपः।

---

(८९) आर्य! किं मे भयं दर्शयसि? सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि, किं पुनरसन्तं।

(९०) बाढं, एष मे स्थिरो निश्चयः।

(९१) बाढम्।

---

(न) स्वस्य कर्मफलभाक्। निजकृतस्य दुष्कर्मणः फलम् अनुभवतु इत्यर्थः। मर्षयिष्यति क्षमिष्यते। राक्षसकलत्रस्य प्रच्छादनं गोपनं। परकलत्रेण परकलत्रसमर्पणेन इत्यर्थः। कलत्रं पत्नीं जीवितं स्वजीवनञ्च, अन्यथा सपरिवारस्त्वं विनङ्क्ष्यसीत्यर्थः।

(प) मे मह्यं भयं अभिप्रेत्यार्थे चतुर्थी। सन्तं तिष्ठन्तम्।

(फ) बाढ़ सत्य, प्रतिज्ञाने इत्यर्थः। "बाढ़प्रतिज्ञयोर्बाढ़"मित्यमरः।

सुलभेषु इत्यादि। परस्य अन्यस्य राक्षसकलत्रस्येत्यर्थः। संवेदने निवेदने समर्पणे कृते सति। अर्थलाभेषु वैभवप्राप्तिषु सुलभेषु सत्सु शिविना राज्ञा औशीनरेण विना इदानीं सम्प्रति कः पुमान् इदम् एतादृशं दुष्करं कष्टाध्यं धनजीवनविनिमयेनापि आश्रितरक्षणमित्यर्थः। कुर्यात् विदध्यात्। पुरा खलु शिविर्नाम कश्चित् राजा श्येनताडितस्य कपोतस्य रक्षणार्थं क्षुधार्तश्येनाय स्वगात्रमांसं दत्त्वा शरणागतं कपोतं ररक्ष इति पौराणिकी कथात्रानुसन्धेया ॥ २४

(ब) निश्चयः स्थिरसंकल्पः।

चन्द०। [शाङ्गं प्रसार्य ] सज्जोम्हि, अणुचिट्ठदु अज्जो अत्तणो अहिआरस्स अणुरूअं। (६१) (भ)

चाण०। [सक्रोधम्।] शार्ङ्गरव ! उच्यताम् अस्मद्वचनात् कालपाशिको दण्डपाशिकश्च,—"शीघ्रमयं दुष्टवणिक् निगृह्यताम्" अथवा—तिष्ठतु, उच्यतां दुर्गपालो विजयपालश्च, गृहीतगृहसारम् एनं सपुत्रकलत्रं संयम्य रक्ष तावत्, यावत् मया वृषलाय कथ्यते, स एव अस्य सर्वस्वप्राणहरणं दण्डम् आज्ञापयिष्यति। (म)

शिष्य०। यद् आज्ञापयति उपाध्यायः। श्रेष्ठिन्! इत इतः।

चन्द०। [उत्थाय।] अज्ज! अअमाअच्छामि। [स्वगतम्] दिट्ठिआ मित्तकज्जेण मे विणासो जणिदो, ण उण पुरिसदोसेण। (६२) (य) [परिक्रम्य शिष्येण सह निष्क्रान्तः।]

चाण०। [सहर्षम्।] हन्त, लब्ध इदानीं राक्षसः। कुतः?—

त्यजत्यप्रियवत् प्राणान् यथा तस्यायमापदि।
तथैवास्यापदि प्राणा नूनं तस्यापि न प्रियाः॥ २५

---

(६१) सज्जोऽस्मि, अनुतिष्ठतु आर्य्य आत्मनोऽधिकारस्य अनुरूपम् [ "सरिसं" इति पाठे—सदृशम् ]।

(६२) आर्य्य ! अयमागच्छामि। दिष्ट्या मित्रकार्य्येण मे विनाशो जनितः न पुनः पुरुषदोषेण।

---

(भ) अनुतिष्ठतु विदधातु। आत्मनः स्वस्य तवेत्यर्थः। अधिकारस्य प्रभुत्वस्य क्षमताया इत्यर्थः। अनुरूपं सदृशम्।

(म) दुष्टवणिक् दुर्बुद्धिसम्पन्नो वाणिज्यव्यवसायी। निगृह्यतां दण्ड्यताम्। गृहीतगृहसारं गृहीतः आत्तः गृहस्य भवनस्य सारः मूलधनादिरूपः स्थिरांशो यस्य स तथोक्तः। सपुत्रकलत्रं पत्नीपुत्राभ्यां सह वर्त्तमानं। संयम्य बद्ध्वा। सर्वस्वप्राणहरणं—सर्वस्वानां सकलधनानां प्राणानां च हरणं यस्मिन् स तथोक्तम्।

(य) मित्रकार्य्येण हेतुना मित्रस्य उपकारार्थमिति भावः। पुरुषदोषेण पुरुषस्य दोषः चरित्रस्खलितकर्मौर्य्यादिरूपः अपराधः तेन तथोक्तेन हेतुनेत्यर्थः दुष्टस्वभावजनितस्य स्वकर्मणः फलेन राजदण्डः नितरां दुःखावहः अयशस्करश्च। इह तु "सन्निमित्ते वरं त्यागो विनाशे नियते सती"ति भावः।

त्यजतीत्यादि। यथा अयं चन्दनदासः तस्य राक्षसस्य आपदि विपत्काले समुपस्थिते पुत्रकलत्रादिविनाशरूपे व्यसने इत्यर्थः। प्राणान् असून् अप्रियवत् अप्रियान् अनभीष्टान्




[ नेपथ्ये कलकलम् । ]

चाण। शार्ङ्गरव !

शिष्य। [ प्रविश्य । ] उपाध्याय ! आज्ञापयतु ।

चाण। ज्ञायतां किमेतत् ।

शिष्य। [ निष्क्रम्य पुनः प्रविश्य सम्भ्रान्तः । ] उपाध्याय ! एष खलु शकटदासं वध्यमानं वध्यभूमेः आदाय समपक्रान्तः सिद्धार्थकः (र)।

चाण। [ स्वगतम् । ]—साधु सिद्धार्थक ! साधु, कृतः कार्य्यारम्भः। [ प्रकाशम् । ] प्रसह्य किमपक्रान्तः ? [ सक्रोधम् । ] वत्स ! उच्यतां भागुरायणो यथा त्वरितमेनं सम्भावयेति। (ल)

शिष्य। [ पुनः तथा कृत्वा प्रविश्य सविषादम् । ] उपाध्याय ! हा धिक् कष्टम्, अपक्रान्तो भागुरायणोऽपि ।

चाण। [ स्वगतम् । ] व्रजन्तु कार्य्यसिद्धये । [ प्रकाशं सक्रोधमिव ] वत्स ! कृतं विषादेन, उच्यन्ताम् अस्मद्वचनाद् भद्रभटपुरुषदत्तहिङ्गरात-बलगुप्तराजसेनरोहिताक्षविजयवर्म्माणः, शीघ्रम् उपसृत्य गृह्यतां दुरात्मा भागुरायणः (व) ।

शिष्य। यदाज्ञापयति उपाध्यायः । [ इति निष्क्रम्य पुनः प्रविश्य सविषादम् । ] उपाध्याय ! हा धिक् कष्टं, सर्वमेव तन्त्रमाकुलीभूतं तेऽपि खलु भद्रभटप्रभृतयः प्रथमम् अप्रभातायामेव रजन्याम् अपक्रान्ताः । (श)

चाण। [ स्वगतम् । ] सर्वेषामेव शिवाः पन्थानः सन्तु । ( प्रकाशम् । ) वत्स ! अलं विषादेन । पश्य,—( ष )

इव व्यक्तीति । तथा अस्य आपदि चन्दनदासस्य पुत्रकलत्रादिनाशरूपे व्यसने समुपस्थास्यति तस्य राक्षसस्य प्राणाः अमून् नूनं निश्चितं प्रियाः प्रीतिप्रदादिनः अभीष्टा इत्यर्थः । न भविष्यन्तीति शेषः । सङ्कटापन्नत्वात् इति भावः ॥ २५

( र ) निष्क्रम्य निर्गत्य । सम्भ्रान्तः सोद्वेगः । वध्यमानं संहन्यमानं । वध्यभूमेः विनाशस्थानात् श्मशानादित्यर्थः । समपक्रान्तः पलायितः ।

( ल ) कार्य्यारम्भः कार्य्यस्य शकटदासं गृहीत्वा पलायनरूपकार्य्यस्य आरम्भः उपक्रमः साधु साधु अतिशोभनं यथा तथा कृतः विहितः । प्रसह्य बलेन । त्वरितं शीघ्रं । एनं सिद्धार्थकं । सम्भावय छलेन समानय । अनुगमनेन सन्धानय इति गूढोऽर्थः ।

( व ) भद्रभटाद्याः राजपुरुषाः ।

( श ) सर्वं सकलं तन्त्रं राज्यं प्रकृतिमण्डलमिति यावत् । आकुलीभूतं अनाकुलं आकुलं भूतं, अनर्केषां राजपुरुषाणां पलायनात् व्यतिव्यस्तमित्यर्थः ।

( ष ) पन्थानः अध्वानः । शिवाः शिवकराः । पथि तेषां मङ्गलमस्तु इत्यर्थः ।

ये याताः किमपि प्रधार्य्य हृदये, पूर्वं गता एव ते,
ये तिष्ठन्ति, भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्य्यमहिमा बुद्धिस्तु मा गान्मम॥ २६

[उत्थाय प्रत्यक्षवदाकाशे लक्ष्यं बध्वा।] एष खलु दुरात्मनो भद्रभट-प्रभृतीन् आहरामि। [आत्मगतम्।] दुरात्मन् राक्षस! क्व इदानीं यास्यसि? एषोऽहमचिरात् भवन्तं,—

स्वच्छन्दमेकचरमुज्ज्वलदानशक्तिम्
उत्सेकिना बलमदेन विगाहमानम्।
बुद्ध्या निगृह्य, वृषलस्य कृते, क्रियायाम्
आरण्यकं गजमिव प्रगुणीकरोमि॥ २७

[इति निष्क्रान्ताः सर्वे।]

इति मुद्राराक्षसे प्रथमोऽङ्कः।

ये याता इत्यादि। ये भागुरायणादयः किमपि किञ्चित् अप्रियं वा हृदये चित्ते प्रधार्य्य विभाव्य अभिप्रेत्येत्यर्थः। याताः स्थानान्तरं गताः। ते जनाः पूर्वं एव प्रायः अभिप्रायस्थिरीकरणसमये इत्यर्थः। गताः याताः, अभावस्यानपेक्षत्वात्। ये जनाः तिष्ठन्ति वर्त्तन्ते, तेऽपि कामं पर्य्याप्तं यथा तथा गमने स्थानान्तरयाने प्रकाम्यन्ते इति प्रकामाः प्रार्थिताः उद्यमाः यत्ना येषां ते प्रकामोद्यमाः भवन्तु। यथेच्छं गच्छन्तु इत्यर्थः। अर्थसाधनविधौ कार्य्यसम्पादनव्यापारे सेनाशतेभ्यः असंख्यवाहिनीभ्यः अधिका समधिकबला, नन्दानाम् उन्मूलनेन उत्पाटनेन दृष्टः प्रत्यक्षीकृतः वीर्य्यस्य बलस्य महिमा प्रभावो यस्याः सा तथोक्ता एका अद्वितीया मम बुद्धिः धीशक्तिः मा गात् न व्यपैतु। केवलेन असाधारणप्रज्ञाप्रभावेण सर्वं सम्पादयिष्यामीत्यर्थः॥ अत्र काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ २६

स्वच्छन्दमित्यादि। एकचरं असहायं पक्षे यूथभ्रष्टं। उज्ज्वला उत्कृष्टा दानशक्तिः वितरणसामर्थ्यं यस्य स तथोक्तः। पक्षे उज्ज्वले उग्रे दाने मदे शक्तिः सामर्थ्यं च यस्य स तथोक्तः। उत्सेकिना गर्ववता बलमदेन सैन्यगर्वेण स्वच्छन्दं यथेच्छं यथा तथा विगाहमानं शत्रुपक्षे प्रविशन्तं। पक्षे उत्सेकिना उद्रिक्तेन बलमदेन स्वशक्तिदर्पेण, स्वच्छन्दं निरङ्कुशं यथा तथा विगाहमानं वनं प्रविशन्तं। आरण्यकं वन्यं गजं करिणमिव भवन्तमिति गद्येनान्वयः, बुद्ध्या बुद्धिकौशलेन निगृह्य वशीकृत्य वृषलस्य चन्द्रगुप्तस्य कृते अर्थे क्रियायां कार्य्ये अचिरात् इत्यर्थः। अचिरात् शीघ्रमेव प्रगुणीकरोमि, अप्रगुणं प्रगुणं करोमि अनुरागिणं पक्षे रज्जुबद्धं करोमि विदधामि। अत्र श्लेषमूलक उपमालङ्कारः। वसन्ततिलकं वृत्तम्॥ २७

इति मुद्राराक्षसव्याख्यायां प्रथमोऽङ्कः समाप्तः।

# द्वितीयोऽङ्कः।

[ ततः प्रविशति आहितुण्डिकः। (क)

आहि।—

जाणन्ति तन्तजुत्तिं जहट्ठिअं मण्डलं अहिलिहन्ति (१)
जे मन्तरक्खणपरा ते सप्पणराहिवे उवचरन्ति ॥ १ (१)

(आकाशे।) (ख) अज्ज ! किं भणासि को तुमं त्ति ? अज्ज ! अहं क्खु आहितुण्डिओ जिण्णविसो णाम। (पुनराकाशे।) किं भणासि अहंपि अहिणा खेलिदुं इच्छामि त्ति ? अध कदरं उण अज्जो वित्तिं उवजीवदि ? (पुनराकाशे।) किं भणासि राअउलसेवओ त्ति ? णं खेलदि ज्जेव अज्जो अहिणा। (ख) किं भणासि कधं त्ति ? अमन्तोसहिकुसलो वालग्गाही, अणिहोदङ्कुसो मत्तगअवरारोही, लद्धाहिआरो जिदकासी राअसेवओ त्ति, एदे तिण्णि अवस्सं विणासमणुहोन्ति। (ग) कधं, दिट्ठमत्तो अदिक्कन्तो एसो।

---

(१) जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपे उपचरन्ति ॥

---

(क) अहेः सर्पस्य तुण्डेन व्यवहरतीति आहितुण्डिकः सर्पक्रीडनोपजीवी।

जानन्तीत्यादि। ये पुरुषाः तन्त्रयुक्तिं तन्त्रेषु स्वराष्ट्रचिन्तायां पक्षे औषधेषु च, युक्तिं नीतिप्रयोगं उपपत्तिञ्च जानन्ति अवगच्छन्ति, "तन्त्रं स्वराष्ट्रचिन्तायां शास्त्रौषधमुख्ययोरपि" इति वैजयन्ती। यथास्थितं यथायथं स्वरूपेण स्थितमित्यर्थः। मण्डलं राष्ट्रं नृपेन्द्रादिमण्डलञ्च अभि अभिलक्ष्य विशेषेण ज्ञात्वा इत्यर्थः, लिखन्ति वशस्थं कुर्वन्ति पक्षे रेखया अङ्कन्ते च। मन्त्ररक्षणपरा, मन्त्रस्य षाड्गुण्यचिन्तनरूपमन्त्रणाकार्यस्य पक्षे गारुडादिमन्त्रस्य च रक्षणे गोपने पराः आसक्ताः मन्त्रस्यैव राजमूलकत्वात्, ते जनाः सर्पनराधिपे सर्पे इव नराधिपे राजनि स्वल्पापराधेऽपि तीक्ष्णप्रतापेन उभयोः बाधकत्वात् तुल्यत्वम्। उपचरन्ति व्यवहरन्ति सेवितुं शक्नुवन्तीत्यर्थः। अत्र श्लेषानुप्राणितो रूपकालङ्कारः॥ १

(ख) किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषणम्।
अप्रविष्टैः सहालापो भवेदाकाशभाषणम्॥ इति दशरूपके।

अप्रविष्टादृश्यपुरुषवाचं स्वयमेव उक्त्वा तदेव तदुत्तरदानं आकाशभाषणं इत्यर्थः। एवं सर्वत्र।

(ग) भणसि कथयसि। खेलितुं क्रीडितुम्। कतरां किमाख्यामित्यर्थ, राजकुलसेवकः

[पुनराकाशे।] अज्ज। तुमं उण किं भणासि—किं एदेसु पेडासमुग्गकेसु त्ति? अज्ज। अप्पजीविआसम्पादआ सप्पा। [पुनराकाशे।] किं भणासि—पेक्खिदुमिच्छामि त्ति? पसीददु पसीददु अज्जो। अत्थानं क्खु एदं, ता जइ दे कोदूहलं, ता एहि एदस्सिं आवासे दंसेमि। [पुनराकाशे।] किं भणासि—एदं क्खु भट्टिणो अमच्चरक्खसस्स गेहं, णत्थि इध अह्मारिसाणं प्पवेसो त्ति? तेण हि गच्छदु अज्जो। जीविआए प्पसादेण अत्थि एत्थ मम प्पवेसो त्ति। कधं एसो वि अदिक्कन्तो। (२) (घ)

[दिशोऽवलोक्य संस्कृतमाश्रित्य (ङ) स्वगतम्।] अहो। आश्चर्यम्। चाणक्यमतिपरिगृहीतं चन्द्रगुप्तम् अवलोक्य, विफलमिव राक्षसप्रयत्नम्

(२) आर्य। किं भणसि कोऽयमिति? आर्य! अहं खलु आहितुण्डिको जीर्णविषो नाम। किं भणसि अहमपि अहिना खेलितुमिच्छामीति? अथ कतरां पुनरार्यो वृत्तिम् उपजीवति? किं भणसि राजकुलसेवक इति? ननु खेलति एव आर्योऽहिना। किं भणसि कथमिति? अमन्त्रौषधिकुशलो व्यालग्राही, अगृहीताङ्कुशो मत्तगजवरारोही, लब्धाधिकारो जितकाशी राजसेवक इति, एते त्रयोऽवश्यं विनाशमनुभवन्ति। कथं दृष्टमात्रोऽतिक्रान्त एष। आर्य! त्वं पुनः किं भणसि—किमेतेषु पेटकसमुद्गकेषु इति? आर्य! आत्मजीविकासम्पादकाः सर्पाः। किं भणसि—प्रेक्षितुमिच्छामीति? प्रसीदतु प्रसीदतु आर्यः। अस्थानं खलु एतत्, तद् यदि ते कौतुहलं तदेहि एतस्मिन्नावासे दर्शयामि। किं भणसि—एतद् खलु भर्तुरमात्यराक्षसस्य गृहं, नास्तीह अस्मादृशानां प्रवेश इति? तेन हि गच्छतु आर्यः, जीविकायाः प्रसादेन अस्ति अत्र मम प्रवेश इति। कथमेषोऽपि अतिक्रान्तः।

---

राजकर्मचारीत्यर्थः। ननु भोः। कथं केन प्रकारेण खेलसि? अमन्त्र गारुडादि औषधि विषदोषहर भैषज्य तयोः कुशलः निपुणः स न भवतीति अमन्त्रौषधिकुशलः अज्ञातमन्त्रभैषज्य व्यालग्राही आहितुण्डिकः। अगृहीत अनालम्बित अङ्कुशो येन सः अगृहीताङ्कुशः आसनदण्डरहितः। मत्तगजवरारोही प्रमत्तमातङ्गारूढः। लब्धः प्राप्तः अधिकारः नियोगो येन, स लब्धाधिकारः जितकाशी जितेन जयेन काशते शोभते इति। राजसेवकः राजपरिचारकः। एते उक्तरूपाः।

(घ) पेटकसमुद्गकेषु पेटकसम्पुटकेषु। आत्मजीविकासम्पादकाः आत्मनः स्वस्य जीविकां आजीवं सम्पादयन्तीति तथोक्ताः। प्रेक्षितुं द्रष्टुम्। प्रसीदतु अनुगृह्णातु। अस्थाने असंप्राप्तस्थाने अनुपयुक्तस्थानमित्यर्थः। एतस्मिन् सम्मुखवर्त्तिनि। आवासे आलये। भर्तुः प्रभोः। अस्मादृशानां मादृगपरिचितानां, अत्रच्छन्देनाव मत्रकर्त्ता बोध्यः। तेन तर्हि। जीविकायाः निजलाभे प्रसादेन अनुग्रहेण। अतिक्रान्तः चलितः।

(ङ) कपटव्यालग्राहिवेषोऽयं उत्तमपात्रत्वात् स्वाभाविकं संस्कृतवचनम्।

अवगच्छामि। राक्षसमतिपरिगृहीतञ्च मलयकेतुम् अवलोक्य, चलितमिवाधिराज्यात (च) चन्द्रगुप्तमवगच्छामि। तथाहि,—

कौटिल्यधीरज्जुनिबद्धमूर्त्तिं
मन्ये स्थिरां मौर्य्यकुलस्य लक्ष्मीम्।
उपायहस्तैरपि राक्षसेन
विकृष्यमाणामिव लक्षयामि ॥ २

तदेवमनयोः सुनयशालिनोः सचिवयोर्विरोधे संशयितेव (छ) नन्दकुललक्ष्मीर्लक्ष्यते। कुतः?—

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययो
र्महावने वनगजयोरिवान्तरे।
अनिश्चयाद्गजवशयेव भीतया
गतागतैर्भृशमिव खिद्यते श्रिया ॥ ३

(च) चाणक्यस्य कौटिल्यस्य मत्या बुद्ध्या परिगृहीतं परिचालितम्। राक्षसस्य मतम् आग्रहातिशय नन्दराज्यीहारि इति शेषः। स तथोक्तं विफल्य चकर्त। पक्षान्तरे राक्षस मतिपरिगृहीतं अमात्यराक्षसबुद्ध्या परिचालितम्। अधिकी राजा अधिराज तस्य भाव अधिराज्य तस्मात साम्राज्यादित्यर्थ।

कौटिल्यधीरित्यादि। कौटिल्यस्य चाणक्यस्य धीः सूक्ष्मा बुद्धिरेव रज्जुः दाम, तया निबद्धा संयता मूर्त्तिः आकृतिर्यस्याः सा तां कौटिल्यधीरज्जुनिबद्धमूर्त्तिं मौर्य्यवंशस्य चन्द्रगुप्तस्य लक्ष्मीं राज्यश्रियं स्थिरां अचञ्चलां मन्ये तर्कयामि। राक्षसेनापि उपायहस्तैः उपाया सामादयः "भेदोदण्डः सामदानमित्युपायाश्चतुष्टयः" इत्यमरः। एव हस्ता तैः सामादिप्रयोग कर्षकैरित्यर्थः विकृष्यमाणां बलात् आकृष्यमाणां इव लक्षयामि अवलोकयामि तर्कयामी त्यर्थः। अत्र उपकोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः। अत्र इन्द्रवज्रोपेन्द्रवज्रयोः सङ्कररूपा उपजाति नाम वृत्तम् ॥ २

(छ) एवमनेन प्रकारेण। अनयोः कौटिल्यराक्षसयोः सुनयशालिनोः सुष्ठु नीतिज्ञयोः। सचिवयोरमात्ययोः। विरोधे विवादे। संशयिता जातसंशया सन्देहाकुला इत्यर्थः। उभयोर्गुणवत्त्वात् श्रिया अपि गुणानुरागित्वादिति भावः।

विरुद्धयोरित्यादि। महावने निबिडकानने वनगजयोः वन्यकरिणोः युध्यमानयो रित्यर्थः। अन्तरे मध्ये गजवशया हस्तिन्या इव "वशा स्त्रीकरिणी च स्यात्" इत्यमरः। इह अत्र भृशं अत्यर्थं विरुद्धयोः अन्योन्यजयार्थं विवदमानयोः मन्त्रिमुख्ययोः सचिवप्रवरयोः चाणक्यराक्षसयोः अन्तरे मध्ये स्थितया इति शेषः। अनिश्चयात् जयपराजययोरनवधारणात् भीतया चकितया इव श्रिया लक्ष्म्या गतागतैः पुनःपुनर्गमनागमनैः खिद्यते क्लान्ते इव। अत्र उपमानुप्राणिता उत्प्रेक्षानामालङ्कारः। अत्र रुचिरावृत्तम्। जभौ सजौ गिति रुचिरा चतुर्ग्रहैः। इति लक्षणात् ॥ ३

तद् यावद् अहममात्यराक्षसं पश्यामि। [इति परिक्रम्य स्थित।]

[ततः प्रविशति आसनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः।]

राक्ष। [ऊर्द्ध्वमवलोक्य सवाष्पम्।] (ज) कष्टं भोः! कष्टम्।—

वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम्।
चिन्तावेशसमाकुलेन मनसा रात्रिन्दिवं जाग्रतः
सैवेयं मम चित्रकर्मरचना भित्तिं विना वर्त्तते ॥ ४

अथवा,—

नेदं विस्मृतभक्तिना न विषयव्यासङ्गरूढात्मना
प्राणप्रच्युतिभीरुणा न च मया, नात्मप्रतिष्ठार्थिना।
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति ॥ ५

(ज) आसनस्थ उपविष्टः। स्वभवनस्थ निजगृहस्थः। सचिन्त चिन्ताकुलः। ऊर्द्ध्वमवलोक्य चिन्ताकुलस्य ऊर्द्ध्वावलोकनं प्रसिद्धम्। सवाष्प पूर्वानुभूतघटनास्मरणात् सरोदनमित्यर्थः।

वृष्णीनामित्यादि। वृष्णीनां अपत्यानि पुमांस इति वृष्णय तेषां वृष्णीनां यदुवंश्यानां इव, नीति दण्डनीति षाड्गुण्यमित्यर्थः, विक्रम पराक्रम शौर्य्यमित्यर्थ। गुणा दयादाक्षिण्यादय तेषां व्यापारैः प्रयोगैश्च शान्ता शमिता द्विष शत्रव यै ते तेषां नीतिविक्रमगुणव्यापारशान्तद्विषां बलबुद्धिगुणाद्यन्यूनितशत्रुपक्षाणां नन्दानां विपुले विशाले कुले वंशे अकरुणया निर्दयया प्रतिकूलया इत्यर्थः। नियत्या दैवेन क्षयं विनाशं नीते प्रापिते सति चिन्तावेशसमाकुलेन, चिन्ता कथमापदुद्धारः स्यादिति भावना तस्या आवेश प्रवेश आगम तेन समाकुलं व्याकुलं तेन मनसा चित्तेन उपलक्षितस्य रात्रिन्दिवं अहोरात्र जाग्रतः निद्रां त्यजतः व्यापारवत इत्यर्थः मम सैव नन्दे जीवति यादृगासीत् तादृश्येव इयं चित्रकर्मेव कल्पितविचित्रकार्यस्य रचना योजना तत्तद्भावनेत्यर्थः। भित्तिं आश्रयं विना प्रवर्त्तते। नेतृहीनत्वात् ममायमुद्यमो विफल इति भावः। पुरा खलु यौवनदृप्ता यदुकुमारा पिण्डारकमहातीर्थे जाम्बवतीपुत्रं साम्बं स्त्रीवेशेन भूषयित्वा विश्वामित्रप्रभृतीन् महामुनीन् प्रणिपातपुरःसरं प्रोचुः, "इयं महाभागा अन्तर्वत्नी निरतां पुत्रकामा, किं जनयिष्यतीति ज्ञातुमिच्छति। दिव्यज्ञानसम्पन्नास्ते तपोधना एवं विप्रलब्धा कुपिता जगदु "इयं मुषलं जनयिष्यति तेन च निखिलानां यादवानां निधनं भविष्यति।" अभूच्च यथाकाले तद्वाक्यं सफलमिति पौराणिकी कथात्रानुसन्धेया। अत्र शार्दूलविक्रीडितं वृत्तम्। उपमातिशयोक्त्यो सङ्करूपालङ्कार ॥ ४

नेदं विस्मृतभक्तिनेत्यादि। परदास्यं परस्य अधुना मलयकेतो दास्यं भृत्यत्वं पराधीनतामित्यर्थः एत्य प्राप्य मया नीतौ नीतिप्रयोगे अत्यर्थं विशेषेण मनश्चित्तं दीयते, स्वामि निधनं

[ आकाशमवलोकयन् सास्रम् । ] भगवति कमलालये ! भृशम् अगुणज्ञाऽसि । (झ) कुतः ?

आनन्दहेतुमपि देवमपास्य नन्दं
रक्ताऽसि किं कथय वैरिणि मौर्य्यपुत्रे ? ।
दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न चपले ! प्रलयं गताऽसि ? ॥ ६

अपिच, अनभिजाते !—[ञ]

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः,
पतिं, पापे ! मौर्य्यं यदसि कुलहीनं वृतवती ?

कार्य्यमनुष्ठीयते इत्यर्थ । इद चित्तनिवेशस्य विकृता भक्तिर्येन तेन विमुखभक्तिना विमुखानुरागेण न दीयते, तथा विषयेषु स्रक्चन्दनवनितादिभोग्यवस्तुषु धी व्यासङ्ग अत्यासक्ति तत्र कङ्क चिरपरिचित आत्मा यस्य स तेन विषयव्यासङ्गरूढात्मना विषयभोगसुखैषिणा इत्यर्थ, न दीयते। तथा प्राणप्रच्युतिभीरुणा प्राणविनाशशङ्किना न दीयते। तथर आत्मप्रतिष्ठार्थिना स्वयशोलिप्सुना न दीयते केवल स्वर्गगत स्वगारूढ देव प्रभुर्योगानन्द भावमात्रा भर्तुर्ण्या वधेन "दस्युगणवशगत" इत्यमर.। आराधित प्रीणित आप्यायित इति यावत्। स्यात् भवेत् इति इति हेतो मनो दीयते इत्यर्थ। लोकान्तरितस्य पितु श्राद्धादिक यथा तत्प्रीतये अनुष्ठीयते तद्वत् ममेदमनुष्ठानं लोकान्तरितस्य प्रभो प्रीतये एव, नतु ममात्र स्वसुखादिफलाभिसन्धिरस्तीति भाव ॥ अत्र परिसंख्यालङ्कार.। अत्र शार्दूलविक्रीडित वृत्त ॥ ५

( झ ) भगवति महाभागे। कमलालये सरोजवासिनि। अगुणज्ञा अगुणवेदिनी अगुणपक्षपाता इत्यर्थ ।

आनन्दहेतुमित्यादि। हे चपले चञ्चले नित्यं गमनाभिलाषिणीत्यर्थ । आनन्दहेतु अति गुणवत्त्वात् सदाह्लादकारणं देवं प्रभु नन्द राजानं अपास्य विहाय,वैरिणि विपक्षे मौर्य्यपुत्रे । दुष्कुलजाते चन्द्रगुप्ते इत्यर्थं । किं किमर्थं रक्ता अनुरक्ता असि,कथय तदिति शेष । गन्धगजस्य उत्कटमदशालिन हस्तिन नाशे निधने दानाम्बुराजिरिव मदजलधारा इव तत्र तस्मिन् नन्दे किं किमर्थं प्रलयं विलयं न गताऽसि प्राप्ताऽसि, एतदपि कथय इति शेष । सकल गुणशालिनि स्वामिनि लोकान्तरिते तव मरणमेवोचित ननु पुरुषान्तराश्रयणमिति भाव । पतिव्रताया पुरुषान्तरग्रहणस्यानौचित्यात्। अत्रोपमालङ्कार: स च परिकरालङ्कारेण संसृज्यते। उक्तिर्विशेषणै साभिप्रायै परिकरो मत इति लक्षणात् ॥ वसन्ततिलकं वृत्तं ॥ ६

( ञ ) अनभिजाते अवश अमत्कृते अकुलीने इत्यर्थ । दुष्कुलजातत्वात् ते सदसद्विवेको नास्ति इति भाव ।

पृथिव्यामित्यादि। पापे पापिष्ठे दुष्कृतकारिणि पृथिव्यां धरण्यां प्रथित विख्यात यत्

प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला,
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥ ७

अपि च, अविनीते ! तदहमाश्रयोन्मूलनेन एव त्वामकामां करोमि । [विचिन्त्य।] मया तावत् सुहृत्तमस्य चन्दनदासस्य गेहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम् । किं कारणमिति ? कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति, तत्रस्थानाम् अस्माभिः सह एककार्य्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यतीति । चन्द्रगुप्तशरीरम् अभिद्रोग्धुम् अस्मत्प्रयुक्तानां तीक्ष्णरसदायिनाम् उपसङ्ग्रहार्थं, परकृत्योपजापार्थञ्च, महता कोषसञ्चयेन स्थापितः शकटदासः । प्रतिक्षणम् अरातिवृत्तान्तोपलब्धये, तत्संहतिभेदाय च व्यापारिताः (ट) सुहृदो जीवसिद्धिप्रभृतयस्तत् किमत्र बहुना ?—

कुलं यस्य तव जायते वै ॥ प्रथितकुलजाः विख्यातवंशोत्पन्नाः भूमिपतयः भूपालाः राजानः किं हत्वा भक्षीभूताः विनष्टा इत्यर्थः । यत् यस्मात् कुलहीनं अनभिजातं मौर्य्यं वृषलं चन्द्रगुप्तं पतिं स्वामिनं कृतवती, अङ्गीकृतवती, सत्स्वप्यभूतेषु बहुषु भूपालेषु स्थितेऽपि नीचस्य चन्द्रगुप्तस्य समाश्रयणं सम्भवेनाऽकृतमित्यर्थः । अथवा काशप्रभवं यत् कुसुमं काशपुष्पमित्यर्थः तस्य प्रान्तः अग्रं तद्वत् चपला अतिचञ्चलेत्यर्थः । पुरन्ध्रीणां पुरस्त्रीणां प्रज्ञा बुद्धिः, प्रकृत्या स्वभावेन पुरुषस्य गुणाः दयादाक्षिण्यविवेकादयः तेषां विज्ञानं सम्यग् विशेषणं तत्र विमुखी पराङ्मुखी भवतीति शेषः । अत्र अर्थान्तरन्यासोऽलङ्कारः । शिखरिणीवृत्तम् ॥ ७

(ट) आश्रयस्य चन्द्रगुप्तरूपाधारस्य उन्मूलनेन ध्वंसेन । अकामां अपूर्णकामां । सुहृत्तमस्य—बन्धुवरस्य । गृहजनं—पत्न्यादिकं । निक्षिप्य—धारीकृत्य । न्याय्यं—न्यायादनपेतं न्यायसङ्गतं । कुसुमपुरस्य अभियोगं आक्रमणं । अनुदासीनः निरुद्योगः । तत्रस्थानां तत्र वर्तमानानां । एकः एकविधः कार्य्यं चन्द्रगुप्तघातनरूपं उद्देश्यं येषां तेषां एककार्य्याणां । देवपादोपजीविनां नन्दराजकर्मचारिणां । उद्यमः चेष्टा । शिथिलीभविष्यति श्लथीभविष्यति मन्दायिष्यते इति यावत् । अभिद्रोग्धुं हिंसितुं । तीक्ष्णरसदायिनां विषप्रयोक्तॄणां । परकृत्यस्य शत्रुकार्य्यस्य उपजापः भेदः तस्मै इदं इति परकृत्योपजापार्थं रिपुकार्य्यभेदाय इत्यर्थः । महता विपुलेन । कोषसञ्चयेन सञ्चितधनराशिना । कृदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायात् । सहार्थे तृतीया । प्रतिक्षणं मुहुर्मुहुः । अरातीनां शत्रूणां वृत्तान्तस्य प्रवृत्तेः उपलब्धिः ज्ञानं तस्यै अरातिवृत्तान्तोपलब्धये शत्रुवृत्तान्तपरिज्ञानाय इत्यर्थः । तेषां शत्रूणां संहतिः समवायः तस्याः भेदः भङ्गः तस्मै तत्संहतिभेदाय शत्रुवर्गाणां मनोमालिन्यजननाय इत्यर्थः । व्यापारिताः नियोजिताः । सुहृदः बान्धवाः ॥

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपुष्य नष्टः ।
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद् यदि न दैवमदृश्यमानम् ॥ ८

[ततः प्रविशति कञ्चुकी ।] (ठ)

कञ्चु ।—

कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्मो मौर्य इव, क्रमेण, नगरे नीतः प्रतिष्ठां मयि ।
तं सम्प्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते, जेतुं न शक्नोति च ॥ ९

[दृष्ट्वा ।] अयममात्यराक्षसः । [परिक्रम्य उपसृत्य च ।] अमात्य ! स्वस्ति भवते ।

राक्ष । आर्य्य जाजले ! अभिवादये । (ड) प्रियंवदक ! आसनम् अत्रभवत उपनय ।

इष्टात्मज इत्यादि । इष्टः प्रियः आत्मजः पुत्रो यस्य स इष्टात्मजः पुत्रप्रियः देवः प्रभुर्नन्दः शार्दूलपोतं व्याघ्रशिशुमिव यं दासीगर्भजातं चन्द्रगुप्तं परिपुष्य प्रतिपाल्य सान्वयः सवंशः "वंशोऽन्ववायः सन्तानः" इत्यमरः । सपदि शीघ्रं नष्टः मृतः । अहं बुद्धिविशिखेन प्रज्ञारूपशरेण तस्य प्राक्परिपुष्टस्य चन्द्रगुप्तस्य मर्म सन्धिस्थानं भिनद्मि विदारयामि । यदि अदृश्यमानं अप्रत्यक्षं दृष्टिवहिर्भूतमित्यर्थः दृष्टे च तस्मिन् तदपि दैवं भाग्यं स्यादिति भावः । दैवं भाग्यं न वर्मीभवेत् वर्मतां नापद्येत, कवचरूपं न स्यादित्यर्थः । भाग्यादृते नास्ति चन्द्रगुप्तरक्षणोपाय इति भावः ॥ रूपकालङ्कारः सचोपमया सङ्कीर्यते । वसन्ततिलकं वृत्तं ॥८

(ठ) कञ्चुकः वारबाणः अस्य अस्तीति कञ्चुकी अन्तःपुरद्वाररक्षकः । तथाच "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्व्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते" इति साहित्यदर्पणम् ॥

काम नन्दमित्यादि । चाणक्यस्य नीत्या नीतिप्रयोगकौशलेन यथा इव जरया शरीरशैथिल्यसम्पादिकया अवस्थया वार्द्धक्येनेत्यर्थः नन्द इव कामं मम भोगाभिलाषं प्रमथ्य निर्द्धूय दूरीकृत्येत्यर्थः । नगरे कुसुमपुरे मौर्य्यश्चन्द्रगुप्त इव मयि धर्म्मः क्रमेण प्रतिष्ठां नीतः प्रापितः प्रतिष्ठापितः । सम्प्रति सेवया कुलक्रमप्राप्तया राजसेवया अन्यत्र मलयकेतुसेवया लब्धान्तरः प्राप्तावकाशः लोभं धनतृष्णा उपचीयमानं वर्द्धिष्णुं वृद्धिं गच्छन्तमिति यावत् । तं धर्म्मं चन्द्रगुप्तञ्च अनु लक्षीकृत्य जयाय जेतुमित्यर्थः । राक्षसवत् राक्षसेन तुल्यं यथा तथा यतते चेष्टते, जेतुं च अभिभवितुं न शक्नोति पारयति । वार्द्धके दौर्म्बल्येन धर्म्माचरणात् धनाकाङ्क्षा तं धर्म्मं नष्ट कर्त्तुं न शक्नोतीति भावः ॥ उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९

प्रियं। एदं आसणं उपविसदु अज्जो। (१)

कञ्चु। [आर्य्येन उपविश्य।] अमात्य! कुमारो मलयकेतुः अमात्यं विज्ञापयति,—"चिरात् प्रभृति आर्य्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम्। यद्यपि स्वामिगुणाः सहसा न शक्यन्ते विस्मर्त्तुं (ड) तथापि मद्विज्ञापनां मानयितुम् अर्हति आर्य्यः।" [इत्याभरणानि दर्शयित्वा।] अमात्य! इमानि आभरणानि कुमारेण स्वशरीरादवतार्य्य प्रेषितानि, धारयितुम् अर्हति आर्य्यः। (ढ)

राक्ष। आर्य्य जाजले! विज्ञाप्यतां मद्वचनात् कुमारः, विस्मृता मया स्वामिगुणाः तव गुणपक्षपातिना। (ण) किन्तु,—

न तावन्निर्वीर्य्यैः परपरिभवाक्रान्तिकृपणै-
र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम्।
न यावन्निःशेषक्षयितरिपुचक्रस्य निहितं
सुगाङ्गे, हेमाङ्कं, नृवर! तव सिंहासनमिदम्॥ १०

(१) इदम् आसनम् उपविशतु आर्य्य।

(ड) आर्य्य मान्य महाशय इत्यर्थः। अभिवादये प्रणमामि।

(ढ) विज्ञापयति निवेदयति। परित्यक्तः परिवर्जितः, उचितः उपयुक्तः शरीरस्य स्नानादेः संस्कारः प्रसाधनं येन सः परित्यक्तोचितशरीरसंस्कारः। पीड्यते व्यथते मम कर्म्मकर्त्तरि लट्। स्वामिनो नन्दस्य गुणाः दयादाक्षिण्यादयः। मद्विज्ञापनां मम प्रार्थनामिति यावत्। मानयितुं रक्षितुं। आभरणानि अलङ्काराः। अवतार्य्य अवरोप्य उन्मुच्येत्यर्थः।

(ण) गुणपक्षपातिना—गुणे विनयसौजन्यादुत्कर्षे पक्षपातः अस्य अस्ति इति तेन। न तावदित्यादि। हे नृवर नरराज यावत् यत्कालपर्य्यन्तं, निःशेषं यथा तथा क्षयितं नाशितं रिपुचक्रं शत्रुमण्डलं यस्य सः निःशेषक्षयितरिपुचक्रः तस्य तथोक्तस्य निःशेषोत्खात-शत्रुमण्डलस्य तव भवतः, इदं हेमाङ्कं स्वर्णचिह्नं सुवर्णमण्डितं इति यावत् सिंहासनं सिंह-चिह्नित राजासनं सुगाङ्गे सुगाङ्गनामकप्रासादे निहितं स्थापितं न करोमीति शेषः। तावत् तत्कालपर्य्यन्तं परपरिभवाक्रान्तिकृपणैः परेषां शत्रूणां परिभवाय आक्रान्तौ आक्रमणे कृपणैः दीनैः पराङ्मुखैरित्यर्थः। अतएव निर्वीर्य्यैः पराक्रमशून्यैः एभिः अङ्गैः अवयवैः प्रतनुं स्वल्पामपि संस्काररचनां प्रसाधनपारिपाट्यमित्यर्थः न वहामि न धारयामि। अन्याभिभवासमर्थानामवयवानां अलङ्कारधारणेन शोभावर्द्धनं विफलमिति भावः। अत्र काव्यलिङ्गमलङ्कारः। शिखरिणी वृत्तम्॥ १०

कञ्चु। अमात्ये त्वयि नेतरि सुलभमेतत् कुमारस्य, तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः। (त)

राक्ष। आर्य्य! कुमार इव अनतिक्रमणीयवचनो भवानपि, तदनुष्ठीयते कुमारस्याज्ञा। (थ)

कञ्चु। [नाट्येन भूषणानि परिधाप्य] स्वस्ति भवते, साधयाम्यहम्। (द)

राक्ष। आर्य्य! अभिवादये। [कञ्चुकी निष्क्रान्तः।] प्रियंवदक! ज्ञायतां कोऽयमस्मद्दर्शनार्थी द्वारि तिष्ठति।

प्रियं। जं अज्जो आणवेदि त्ति। [परिक्रम्य आहितुण्डिकं दृष्ट्वा]। भो अज्ज! को तुमं? ॥ ४ ॥

आहि। भद्द! अहं क्खु आहितुण्डिओ जिण्णविसो णाम, इच्छामि अमच्चरक्खसस्स पुरदो सप्पेहिं खेलिदुं। (५)

प्रिय। चिट्ठ, जाव अमच्चस्स णिवेदेमि। [राक्षसमुपसृत्य।] अज्ज! एसो क्खु सप्पोवजीवी इच्छदि सप्पेहिं अमच्चस्स पुरदो खेलिदुं। (६) (ध)

राक्ष। [वामाक्षिस्पन्दनं सूचयित्वा आत्मगतम्।] कथं प्रथममेव सर्पदर्शनम्! [प्रकाशम्।] प्रियंवदक! न मे कुतूहलमस्ति सर्पदर्शने, तत् परितोष्य विसर्ज्जयैनम्। (न)

---

(४) यदार्य्य आज्ञापयतीति। ननु आर्य्य! कस्त्वम्?

(५) भद्र! अहं खल्वाहितुण्डिको जीर्णविषो नाम, इच्छाम्यमात्यराक्षसस्य पुरतः सर्पैः खेलितुम्।

(६) तिष्ठ, यावदमात्यस्य निवेदयामि। आर्य्य! एष खलु सर्पोपजीवी इच्छति सर्पैः अमात्यस्य पुरतः खेलितुम्।

---

(त) नेतरि कर्त्तरि। प्रतिमान्यतां प्रतिपाल्यताम्। प्रणयः प्रार्थना।

(थ) न अतिक्रमणीयं वचनं यस्य स अनतिक्रमणीयवचनः अलङ्घनीयवाक्यः।

(द) साधयामि गच्छामि। "प्रतिष्ठ गच्छतेः साधिर्गमेः स्थाने प्रयुज्यते" इति साहित्यदर्पणोक्तिः।

(ध) सर्पोपजीवी सर्पैः उपजीवति असौ इति। पुरतः समक्षं अग्रे इत्यर्थः।

(न) कुतूहलं कौतुकं आनन्द इत्यर्थः। परितोष्य सन्तोष्य। एनमाहितुण्डिकं विसर्ज्जय स्थानान्तरं गमय, इत्यर्थः।

प्रिय। जं अज्जो आणवेदि। [परिक्रम्य आहितुण्डिकमुपगम्य।] भद्द! एसो क्खु दे अमच्चो अदंसणेण पसादं करेदि, ण उण सप्पदंसणेण। (७) (प)

आहि। भद्द! विण्णवेहि मम वअणेण अमच्चं,—"ण केवलं अहं सप्पोपजीवी, पाउअकवी क्खु अहं, ता जइ मे दंसणेन अमच्चो पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं पसीददु" त्ति (८)(फ) [पत्रमर्पयति।]

प्रियं। [पत्रं गृहीत्वा राक्षसमुपगम्य।] अमच्च! एसो क्खु आहितुण्डिओ विण्णवेदि,—"ण केवलं अहं सप्पोवजीवी, पाउअकवी क्खु अहं, ता जइ मे दंसणेण अमच्चो पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं पसीददु" त्ति। (९)

राक्ष। [पत्रं गृहीत्वा वाचयति।]—

पाऊण णिरवसेसं कुसुमरसं अत्तणो कुसलदाए।
जं उग्गिरइ भमरो तं अण्णाणं कुणइ कज्जं (१०)॥ ११

(७) यदार्य्य आज्ञापयति। भद्र! एष खलु ते अमात्योऽदर्शनेन प्रसादं करोति न पुनः सर्पदर्शनेन।

(८) भद्र! विज्ञापय मम वचनेनामात्य— "न केवलमहं सर्पोपजीवी, प्राकृतकविः खल्वहं, तस्माद् यदि मे दर्शनेन अमात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदतु" इति।

(९) अमात्य। एष खलु आहितुण्डिको विज्ञापयति—"न केवलमहं सर्पोपजीवी, प्राकृतकविः खल्वहं तस्माद् यदि मे दर्शनेन अमात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदतु" इति।

(१०) पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया।
यदुद्गिरति भ्रमरस्तदन्येषां करोति कार्य्यम्॥

(प) अदर्शनेन साक्षात्कारं विना। प्रसादं पारितोषिकप्रदानरूपमनुग्रहं सर्पदर्शनेन न प्रयोजनमित्यर्थः।

(फ) प्राकृतकविः प्राकृतभाषाभिज्ञः पण्डितः पत्रे [illegible]। वाचयितुं पाठयितुम्। प्रसीदतु अनुगृह्णातु। अनुगृह्य वाचयत्वित्यर्थः।

पीत्वेत्यादि। आत्मनः स्वस्य कुशलतया नैपुण्येन निरवशेषं निःशेषं कुसुमरसं पुष्परसं मकरन्दमित्यर्थः कुसुमपुरस्य सभाम् इति गूढोऽर्थः। पीत्वा भ्रमरः मधुकरः भ्रमणकारी चरश्च यत् उद्गिरति वमति वदति च तत् मधु मधुवत् मिष्टं वचनाकारञ्च अन्येषां अपरेषां कार्य्यं आरोग्यादिकं सन्धिविग्रहादिकञ्च करोति साधयति। अत्र अप्रस्तुतप्रशंसालङ्कारः॥ ११

राक्ष। [आत्मगतम्।] अये। कुसुमपुरवृत्तान्तज्ञ अहं भवत्प्रणिधिरेति गाथार्थः। आः कार्य्यव्यग्रत्वात् मनसः प्रभूतत्वाच्च प्रणिधीनां विस्मृतम्, इदानीं स्मृतिरुपलब्धा। व्यक्तम् आहितुण्डिकच्छद्मना कुसुमपुराद् आगतेन विराधगुप्तेन अनेन भवितव्यम् (व) [प्रकाशम्।] प्रियंवदक। प्रवेशय एनं, सुकविः एषः, श्रोतव्यम् अस्मात् सुभाषितम्।

प्रिय। जं अज्जो आणवेदि त्ति। [आहितुण्डिकमुपसृत्य]। उवसप्पदु अज्जो। (११)

आहि। [नाट्येन उपसृत्य अवलोक्य च संस्कृतमाश्रित्य आत्मगतम्।] अये। अयम् अमात्यराक्षसः तिष्ठति। स एषः —

वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः।
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी,
मौर्य्यस्योरसि नाधुनाऽपि कुरुते वामेतरं श्रीः स्तनम् ॥१२

[प्रकाशम्।] जअदु जअदु, अमच्चो। (१२)

राक्ष। [विलोक्य।] अये विराध —" [इत्यर्द्धोक्ते विरुदश्रुति ]

---

(११) यदार्य्य आज्ञापयति। उपसर्पतु आर्य्यः।

(१२) जयतु जयतु अमात्यः।

---

(व) कुसुमपुरवृत्तान्तज्ञ कुसुमपुरस्य वृत्तान्तं जानातीति तथोक्तः। भवत्प्रणिधि भवतस्तव प्रणिधिः गूढचरः। गाथायाः श्लोकस्य अर्थः तात्पर्य्यम्। कार्य्यव्यग्रत्वात् कार्य्यव्याकुलत्वात्। प्रभूतत्वात् बाहुल्यात्। स्मृति स्मरणं। उपलब्धा प्राप्ता। व्यक्तं निश्चितं। आहितुण्डिकस्य छद्म छलं यस्य सः तेन तथोक्तेन।

वामां बाहुलतामित्यादि। अस्य राक्षसस्य उद्यमे युद्धोद्योगे आशङ्कते इति तच्छीला उद्यमाशङ्किनी उद्योगचकिता श्रीः राजलक्ष्मीः वामां बाहुलतां भुजवल्लीं कण्ठे गले शिथिलं यथा अगाढं निवेश्य अर्पयित्वा विवृत्तानना भयात् पराङ्मुखी बलात् प्रसभं स्कन्धे निहितया स्थापितया अपि मुहुः पुनः पुनः अङ्के आपतन्त्या स्खलन्त्या दक्षिणया बाहुलतया उपलक्षिता सती मौर्य्यस्य चन्द्रगुप्तस्य उरसि वक्षसि अधुनाऽपि इदानीमपि गाढं यथा तथा, आलिङ्गनस्य आश्लेषस्य सङ्गेन संसर्गेण पीडितं मुखं चूचुकं यस्य तं तथोक्तं वामेतरं दक्षिणं स्तनं कुचं न कुरुते न विदधाति। श्रीलायाः चित्तस्थैर्य्याभावेन निरानन्दत्वात् प्रगाढाश्लेषे असमर्थ इत्यर्थः। अत्र प्रस्तुतायां श्रियां तुल्यकार्य्यलिङ्गविशेषणैः करणैरप्रस्तुतायाः कस्याश्चित् नायिकायाः व्यवहारारोपात् समासोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ १२

प्रियंवदक! भुक्तं इदानीं विनोदयाम, तद् विश्रम्यतां परिजनेन, त्वमपि स्वमधिकारम् अशून्यं कुरु। (भ)

प्रिय। जं अमच्चो आणवेदि त्ति (१२) [सपरिवारो निष्क्रान्तः]।

राक्ष। सखे! विराधगुप्त! इदम् आसनम् आस्यताम्।

विरा। यद् आज्ञापयति अमात्य इति। [नाट्येन उपविष्टः]।

राक्ष। [सखेदं निरूप्य] अहो! देवपादपद्मोपजीविनो जनस्य इयम् अवस्था। (म) [इति रोदिति]।

विरा। अमात्य! अलं शोकेन, नातिचिराद् अमात्योऽस्मान् नूनं पुरातनीम् अवस्थाम् आरोपयिष्यति। (य)

राक्ष। सखे! विराधगुप्त! वर्णय इदानीं कुसुमपुरवृत्तान्तम्।

विरा। अमात्य! विस्तीर्णः कुसुमपुरवृत्तान्तः, तदाज्ञापय कुतः प्रभृति कथयामि?

राक्ष। सखे! चन्द्रगुप्तस्य तावत् नगरप्रवेशात् प्रभृति, अस्मत्प्रयुक्तैः तीक्ष्णरसदायिभिः किम् अनुष्ठितमिति आदितः श्रोतुम् इच्छामि। (र)

विरा। एष कथयामि। अस्ति तावत् शकयवनकिरातकाम्बोजपारसीकवाह्लीकप्रभृतिभिः चाणक्यमतिपरिगृहीतैः चन्द्रगुप्तपर्वतेश्वरबलैः उदधिभिः इव, प्रलयकालचलितसलिलसञ्चयैः, समन्तात् उपरुद्धं कुसुमपुरम्। (ल)

(१२) यदमात्य आज्ञापयतीति।

---

(भ) परिजनसमीपे रहस्यप्रकाशनमयं एव अर्थोक्तिकारणं। विश्रम्यतु —आत्मानं स्वस्थं करोतु। स्वं स्वकीयं अधिकारं अधिकृतकार्यं द्वाररक्षणरूपं अशून्यं कुरु पालय पूर्णं निरूपय।

(म) देवस्य नन्दराजस्य पादपद्मं उपजीवति यः तस्य इयं एतादृशी। अवस्था दशा।

(य) पुरातनीं प्राचीनाम्। अवस्थां दशां आरोपयिष्यति प्रापयिष्यति।

(र) अस्मत्प्रयुक्तैः मया नियुक्तैः। तीक्ष्णरसदायिभिः विषप्रयोक्तृभिः। अनुष्ठितं कृतम्। आदितः प्रथमतः।

(ल) चाणक्यमतिपरिगृहीतैः चाणक्यप्रज्ञापरिचालितैः। चन्द्रगुप्तस्य पर्वतेश्वरस्य बलैः सैन्यैः प्रलयकाले कल्पान्तसमये चलितश्चञ्चल उच्छल इत्यर्थः सलिलसञ्चयो जलराशिर्येषां तैः तथोक्तैः। उदधिभिरिव समुद्रैरिव। उपरुद्धं परिवेष्टितम्।

राच। [शस्त्रमाकृष्य ससम्भ्रमम्।] मयि स्थिते, कः कुसुमपुरम् उपरोत्स्यति! प्रवीरक! प्रवीरक! (व) क्षिप्रमिदानीम्—

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्रम्यतां,
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम्।
मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले,
ते निर्यान्तु, मया सहैकमनसो, येषामभीष्टं यशः॥ १३

विरा। अमात्य! अलमावेगेन। वृत्तमिदं वर्ण्यते। (ग)

राच। कथं वृत्तमिदम्! मया पुनर्ज्ञातं स एव कालो वर्त्तते इति। [सबाष्पमात्मगतम्।] हा देव नन्द! स्मरति ते राक्षसः प्रसादानाम् (ख) यस्तु एवंविधे काले—

यत्रैषा मेघनीला चलति गजघटा, राक्षसस्तत्र यायाद्
एतत् पारिप्लवाम्भःप्लुति तुरगबलं वार्य्यतां राक्षसेन।
पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन्मह्यमाज्ञाम्
अज्ञासीः स्नेहयोगात् स्थितमिव नगरे राक्षसानां सहस्रम्॥१४

(व) प्रवीरक इति भृत्यान्तरस्य नाम। उपरोत्स्यति अवरोत्स्यति।

प्राकारानित्यादि। शरासनधरैः धनुर्धारिभिः प्राकारान् परितः प्राचीरान् समन्तात् क्षिप्रं शीघ्रं परिक्रम्यतां परिभ्रम्यताम्। परेषां शत्रूणां द्विपघटानां गजवृन्दानां भेदे विदारणे क्षमैः शक्तैः द्विरदैः करिभिः द्वारेषु पुरद्वारेषु स्थीयतां अवस्थीयताम्। येषां सैन्यानां यशः कीर्त्तिः अभीष्टं अभिलषितं ते भटा इत्यर्थः मृत्युभयं मरणभयं मुक्त्वा परित्यज्य दुर्बले क्षीणे शत्रोर्विपक्षस्य बले सैन्ये प्रहर्त्तुं मनो येषां ते प्रहर्त्तुमनसः कृतमनसः इत्यर्थः। मया सह सार्द्धं, एकं तुल्यं मनो येषां एकमनसः समानाभिप्रायाः इत्यर्थः निर्यान्तु निर्गच्छन्तु॥ १३

(ग) आवेगेन उद्वेगेन। आवेगो निरर्थक इत्यर्थः। वृत्तं अतीतम्।

यत्रैषा इत्यादि। यत्र यस्मिन् रणप्रदेशे एषा मेघनीला मेघश्यामा गजघटा वारणश्रेणी चलति भ्रमति तत्र तस्मिन् प्रदेशे राक्षसः यायात् गच्छेत्। एतत् पारिप्लवं अतिचञ्चलं यदम्भः तस्य प्लुतिरिव प्लुतिः गमनं यस्य तत् पारिप्लवाम्भःप्लुति, तुरगबलं अश्वसैन्यं राक्षसेन वार्य्यतां। राक्षसः पत्तीनां पदातिसैन्यानां बलं शक्तिं अन्तं नाशं नयतु प्रापयतु। इति अनेन प्रकारेण मह्यं आज्ञां आदेशं प्रेषयन् प्रयच्छन् स्नेहयोगात् प्रीतिवशात् इह नगरे स्थितं अवतिष्ठमानं राक्षसानां सहस्रं अज्ञासीः अजानाः चिन्तितवानित्यर्थः। कार्य्यसम्पादनक्षमतया सर्वकार्य्यव्यापृतत्वात् एकमपि मां बहु मन्यमानो भवान् पर्य्याप्तं सहस्रमकरोदिति भावः अत अनेकक्रियापदानामेककर्त्तृत्वात्

ततस्तत १ (प)

विरा। ततः समन्तात् उपरुद्धं पुष्पपुरम् अवलोक्य, बहुदिवसप्रवृत्तं महद् उपरोधवैशसम् उपरि पौराणां परिवर्त्तमानम् असहमाने, तस्याम् अवस्थायां, पौरजनापेक्षया, सुरङ्गाम् उपेत्य अपक्रान्ते तपोवनाय देवे सर्वार्थसिद्धौ, स्वामिविरहात् सुशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु जयघोषणाव्याघातादिसाहसानुमितान्तर्नगरवासिषु पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गया बहिरपगतेषु युष्मासु चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्वतेश्वरे—" (स)

राक्ष। सखे। पश्य आश्चर्यम्,—

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता,
हन्तुं शक्तिरिवार्जुनं बलवती, या चन्द्रगुप्तं मया।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्वतनृपं तद्वध्यमेवावधीत्॥ १५

दीपकमलङ्कारः। अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति लक्षणात्। स्रग्धरा वृत्तम्॥ १५॥

(प) ततः तदनन्तरं सम्भूय विरतिः।

(स) समन्तात् सर्वतः। उपरुद्धम् आवृतम्। बहुदिवसप्रवृत्तं चिरात् आरब्धं महत् विपुलं। उपरोधवैशसम्—विशसति हिनस्ति इति विशसः घातुकः, तस्य कर्म वैशसं उपरोधेन अवरोधेन वैशसं मारणं। परिवर्त्तमानं विद्यमानं अवतिष्ठमानं। असहमाने सोढुं अशक्नुवति। पौरजनापेक्षया पौरजनानुमत्या। सुरङ्गां भूमध्यवर्त्तिनीं गुप्तपदवीं उपेत्य प्राप्य। अपक्रान्ते पलायिते। तपोवनाय तपोवनमुद्दिश्य। स्वामिनः प्रभोः विरहात् स्वामिविरहात् नायकाभावात् कर्त्तृशून्यत्वात्। सु सुष्ठु अतिशयेनेत्यर्थः शिथिलीकृताः श्लथीकृताः प्रयत्नाः आग्रहाः येषां तानि तथोक्तेषु। जयघोषणायाः विजयावज्ञापनस्य चन्द्रगुप्तस्येति शेषः। व्याघातः अन्तरायः आदिर्येषां तानि तथोक्तानि यानि साहसानि साहसाचरितकार्याणीत्यर्थः तैः अनुमिताः सम्भाविताः अन्तर्नगरवासिनः नगरमध्यवर्त्तिनो जनाः ये तादृशेषु। बहिः बहिर्देशं। घातिते मारिते। तपस्विनि वराके।

कर्णेनेवेत्यादि। कर्णेन दुर्योधनमित्रेण राधानन्दनेन इव मया अर्जुनं तृतीयपाण्डवमिव चन्द्रगुप्तं हन्तुं विनाशयितुं एकं पुरुषं व्यापादयितुं शीलं यस्याः सा एकपुरुषव्यापादिनी एकपुरुषघातिनी बलवती सामर्थ्यशालिनी शक्तिः अस्त्रविशेष इव या विषाङ्गना विषकन्या रक्षिता सयत्नं स्थापिता सा एतादृशी शक्तिः विषाङ्गना [illegible] विष्णोः कूटनीतिकुशलस्य चाणक्यस्य विष्णुगुप्तहतकस्य हतचाणक्यस्य, अत्यन्तम् भवम् आत्यन्तिकं यत् श्रेयः तस्मै

विरा। अमात्य ! दैवस्य अत्र कामचारः, किमत्र क्रियते ? (ह)

राच। ततस्ततः ?

विरा। "—ततः पितृवधपरित्रासाद् अपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ, विश्वासिते च पर्वतकभ्रातरि वैरोचके, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्यहतकेन आहूय अभिहिताः कुसुमपुरनिवासिनः सर्वे एव सूत्रधाराः "यथा सांवत्सरिकवचनाद् अर्धरात्रसमये अभिमतः चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, ततः, प्रथमद्वारात् प्रभृति सस्क्रियतां राजभवनम्" इति। ततः सूत्रधारैः अभिहितम्,—"आर्य ! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशम् उपलभ्य सूत्रधारेण दारुवर्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराजद्वारम्। इदानीम् अस्माभिः अभ्यन्तरे संस्कारो विधेयः" इति। ततः चाणक्यवटुना, अनादिष्टेनैव दारुवर्मणा संस्कृतं राजभवनद्वारम् इति परितुष्टेन, दारुवर्मणः सुचिरं दाक्ष्यम् अभिनन्द्य अभिहितम् "अचिरादस्य दाक्ष्यस्य अनुरूपं फलम् अधिगमिष्यसि दारुवर्मन्" । (क)

अयमाशयः यथा महाबलशालिने हिडिम्बायाः अपत्याय पुत्राय घटोत्कचाय न तु अर्जुनाय घटोत्कचमिव तस्य विषकन्यया चन्द्रगुप्तस्य च वधो यथार्हः (एकस्य इतरापेक्षया अभ्यर्हितत्वादिति भावः।) एवं पर्वतनृपस्य पर्वतेश्वरं हत्वा प्राप्य अवधीत् घातितवान्। अत्र इयं पौराणिकी कथाऽनुसन्धेया पुरा खलु देवराज ब्राह्मणवेशधारी कर्णमुपेत्य तस्य सहजं कवचं कुण्डलञ्च प्रार्थयामास, दानशौण्डः कर्णः याचकानुपेक्षमाणस्तु तस्मै कुण्डले कवचं कुण्डलञ्च स्वगात्रादुत्कृत्य ददौ, प्रीतो देवराजः एकपुरुषघातिनीं अव्यर्थां शक्तिं तस्मै कर्णाय ददौ, कर्णश्च तदस्त्रं अर्जुनवधार्थं रक्षति, ततः कुरुक्षेत्र महासमरे घटोत्कचेन प्रमथ्यमानां कौरववाहिनीमवलोक्य अत्यार्तेषु तं शक्त्या मत्वा हत्वान्, तया शक्त्या घटोत्कचं अवधीत्। अत्र उपमालङ्कारः स्पष्ट एव। शार्दूलविक्रीडितं वृत्तम् ॥ १५

(ह) कामचारः—स्वेच्छाचारित्वं। अत्र दैवस्य स्वेच्छाचारित्वे [illegible] क्रियते प्रतिविधीयते दैवं प्रतिरोद्धुं नास्माभिः कथमपि शक्यते इत्यर्थः।

(क) पितुर्जनकस्य वधात् हननात् यस्त्रासः भयं तस्मात् पितृवधपरित्रासात् पितृहत्याजनितभयात्। विश्वासिते जनितप्रत्यये। सूत्रधाराः सूत्रं धृत्वा ये शिल्पं कुर्वन्ति, तक्षाण इत्यर्थः। सांवत्सरिकस्य दैवज्ञस्य वचनात्। राजेन्द्र इति अपरार्थ स

राच। [साहसम्।] सखे! कुत चाणक्यवटो परितोष, अफलम् अनिष्टफल वा दारुवर्मण प्रयत्नम् अवगच्छामि। यदनेन बुद्धिमोहात्, अथवा राजभक्तिप्रकर्षात्, नियोगकालम् अप्रतीक्षमाणेन, सञ्जनित चाणक्यवटो चेतसि बलवान् विकल्प। (ख) ततस्तत?

विरा। तत चाणक्यहतकेन अनुकूललग्नवशाद् अद्य अर्द्धरात्र समये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, शिल्पिन पौराश्च गृहीतार्थान् कृत्वा, तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातर वैरोचकमेकासने चन्द्रगुप्तेन सह उपवेश्य, कृत पृथ्वीराज्यार्द्धभाग। (ग)

राच। किञ्च अतिसृष्ट पर्वतेश्वरभ्रात्रे वैरोचकाय पूर्वप्रतिश्रुत राज्यार्द्धम्? (घ)

विरा। अमात्य! अथ किम्।

राच। [आत्मगतम्] नियतम् अतिधूर्त्तवटुना तस्यापि तपस्विन कमपि उपांशुवधम् आकलय्य पर्वतेश्वरविनाशजातस्य अयशस परिहारार्थम् एषा लोकप्रतिपत्ति उपचरिता (ङ)। [प्रकाशम्]। ततस्तत?

अत्र समय शुभकाल तस्मिन् अर्द्धरात्रसमये निशीथसमये इत्यर्थ। अभिमत अभीष्ट। प्रथमद्वाराम् प्रभृति पूर्वद्वारमारभ्य क्रियता कल्प्यतां अलङ्क्रियतां वा। कनकतोरणस्य हिरण्मयस्य द्वारस्य स्तम्भादिभि सन्निवेशादिभि। अभ्यन्तरे भवन पुरे। विधेय कर्त्तव्य। दाक्ष्य दक्षता नैपुण्य मति यावत्। सुचिर बहुकाल अभिनन्द्य आहत्य। अचिरात् सत्व। अनुरूप योग्य। फल पारितोषिक। अधिगमिष्यसि लप्स्यसे। दारुवर्मा नाम सूत्रधार।

(ख) अफल विफल। अनिष्टफल कुफल। प्रयत्न चेष्टां। यत् यस्मात्। बुद्धिमोहात् बुद्धिभ्रमात्। राजभक्तेः अनुरागस्य प्रकर्षात् आधिक्यात्। नियोगकाल आदेशसमय। अप्रतीक्षमाणेन अनपेक्षमाणेन। सञ्जनित समुत्पादित। बलवान् विकल्प महान् संशय।

(ग) अनुकूलं यत् लग्न ग्रहावस्थाकाल इत्यर्थ तस्य वश तस्मात् शुभसमयवशात्। गृहीतार्थान् विदितार्थान्। तस्मिन्नेव क्षणे चन्द्रगुप्तभवनप्रवेशसमये एव। पृथ्वी एव राज्य तस्य अर्द्धभाग अर्द्धांश। कृत विहित।

(घ) अतिसृष्ट प्रदत्तं। पूर्वप्रतिश्रुत प्राक् अङ्गीकृतं।

(ङ) उपांशुवधं गुप्तहत्यां। आकलय्य मनसि विविच्य। अयशस अकीर्त्तेः अपकर्षस्य इति यावत्। परिहारार्थं प्रत्याख्यानार्थं। लोकेषु प्रतिपत्ति ख्याति: अमात्यादिलक्षणा इति यावत्। उपचरिता अनुष्ठिता प्रचारितेति यावत्।

विरा। ततः प्रथममेव प्रकाशीकृते चन्द्रगुप्तस्य अर्द्धरात्रे नन्दभवनप्रवेशे, कृताभिषेके च वैरोचके, हिमविमलमुक्तागुणपरिक्षेपपरचितपटुवारवाणप्रच्छादितशरीरे, मणिमयमुकुटनिविडनियमितरुचिरतरमौलौ, सुरभिकुसुमदामवैकक्षिकावभासितवक्षःस्थले, परिचितदर्शनैरपि अनभिज्ञायमाने, नृपाकृतौ चाणक्यहतकस्य आज्ञया चन्द्रगुप्तोपवाह्यां चन्द्रलेखाभिधानां नागवशाम् आरूढे, चन्द्रगुप्तानुयायिना राजलोकेन अनुगम्यमाने, जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोचके, युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्मणा, चन्द्रगुप्तोऽयमिति मन्यमानेन, वैरोचकस्य उपरि निपातनाय सज्जीकृत यन्त्रतोरणम् (च)। अत्रान्तरे, बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना बर्बरकेण, कनकदण्डान्तर्निहिताम् असिपुत्रिकाम् आक्रष्टुकामेन अवलम्बिता करेण, कनकशृङ्खलासुखावलम्बिनी कनकदण्डिका। (छ)

राक्ष। उभयोरपि अस्थाने यत्नः। ततस्ततः?

(च) प्रकाशीकृते सर्वजनावदिते इत्यर्थः। कृतः अभिषेको यस्य तस्मिन् कृताभिषेके राज्याभिषिक्ते। हिमम् इव विमलः निर्मलः स्वच्छ इत्यर्थः यः मुक्तागुणः मुक्ताहारः तस्य परिक्षेपेण परितः प्रक्षेपेण उपरचितः कृतः पटुः उज्ज्वलः यो वारवाणः कञ्चुकः तेन प्रच्छादितं शरीरं यस्य तादृशे। मणिमयेन रत्नखचितेन मुकुटेन किरीटेन निविडं गाढं यथा तथा नियमितः बद्धः अतिशयेन रुचिरः रुचिरतरः अतिमनोहरः मौलिः केशः तस्मिन् तथोक्ते। सुरभिकुसुमानां सुगन्धपुष्पाणां दाम माला एव वैकक्षिका यज्ञोपवीतवत् तिर्य्यग्विलम्बमाना "कक्षान् वैकक्षिकन्तु तत्। यत् तिर्य्यगुरसि क्षिप्तं" इत्यमरः। तया अवभासितं परिशोभितं विपुलं विशालं वक्षःस्थलं यस्य तस्मिन् तथोक्ते। परिचितदर्शनैः दर्शनैः अभ्यस्तैरित्यर्थः। अनभिज्ञायमाने अनवबुध्यमाने। नृपाकृतौ राजतुल्याकारे। चन्द्रगुप्तोपवाह्यां चन्द्रगुप्तस्य वाहनभूताम्। चन्द्रलेखाभिधानां चन्द्रलेखानामिकाम्। नागवशां हस्तिनीम्। जवेन वेगेन। सज्जीकृत सज्जीकृतं सज्जितमित्यर्थः। यन्त्रविशिष्टं तोरणं तोरणरूपेण निर्म्मितं यन्त्रमिति वा।

(छ) निगृहीतानि निरुद्धानि वाहनानि हस्त्यादयो यैः तेषु। स्थितेषु अवस्थितेषु। चन्द्रगुप्तनिषादिना चन्द्रगुप्तस्य हस्तिपकेन। कनकमयस्य दण्डस्य यष्टेः अन्तः निहितां मध्यवर्त्तिनीम्। असिपुत्रिकां छुरिकाम्। "स्यात् छुरी चासिपुत्री च छुरिका चासिधेनुका" इत्यमरः। आक्रष्टुकामेन आक्रष्टुमभिलषता। कनकस्य सुवर्णस्य शृङ्खला रज्जुरित्यर्थः। सा सुखावलम्बिनी यस्याः तथोक्ता। कनकदण्डिका स्वर्णयष्टिः।

विरा। अथ जघनाभिघातम् उत्प्रेक्षमाणा गजवधू अतिजवनतया गत्यन्तरम् आरूढवती। ततः प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन भ्रष्टलक्ष्यपतता यन्त्रतोरणेन आकृष्टकृपाणो व्यग्रपाणिः अनासाद्यैव चन्द्रगुप्तप्रत्याशया वैरोचकः दारुवर्मणा हतः तपस्वी वर्वरकः। ततो दारुवर्मणा, यन्त्रतोरणपातम् आत्मविनाशफलम् अवधार्य शीघ्रमेव उत्तुङ्गतोरणस्थानम् आरूढेन, यन्त्रघटनबीजलोहकीलकम् आदाय हस्तिनीगत एव हतः तपस्वी (ज) वैरोचकः।

राक्ष। हा कष्टम् अनर्थद्वयमापतितम्, न हतः चन्द्रगुप्तोऽसौ, हतौ वैरोचकवर्वरकौ। [आत्मगतम्।] न एतौ उभौ हतौ, दैवेन वयमेव हताः। [प्रकाशम्।] अथ स सूत्रधारो दारुवर्मा क्व?

विरा। वैरोचकपुरःसरैः पदातिलोकैर्लोष्टघातं हतः। (झ)

राक्ष। [सास्रम्।] कष्टं भोः कष्टम्। वत्सलेन सुहृदा दारुवर्मणा वियुक्ताः स्मः। (ञ) अथ तेन तत्र भिषजा अभयदत्तेन किमनुष्ठितम्?

विरा। अमात्य! सर्वमनुष्ठितम्।

राक्ष। [सहर्षम्।] अपि नाम सखे! हतः चन्द्रगुप्तहतकः?

विरा। अमात्य! दैवात् न हतः।

(ज) जघने नितम्बदेशे अभिघातं ताडनम्। उत्प्रेक्षमाणा सम्भावयन्ती। गजवधूः हस्तिनी। अतिजवनतया अतिवेगेन। गत्यन्तरं विभिन्नां गतिं आरूढवती प्राप्तवती। प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन् प्रथमायां गतौ हस्त्यावरितस्य गजस्य अनुरोधेन अपेक्षया प्रत्याकलितं विघृतं मुक्तञ्च तेन तथोक्तेन। भ्रष्टलक्ष्यं च्युतलक्ष्यं यथा तथा। आकृष्टकृपाणः गृहीतखड्गः। व्यग्रपाणिः व्याकुलहस्तः। अनासाद्य अप्राप्य। आसनं विनाश राजपुरुषकर्तृकनिधनमेव फलं यस्य तं आत्मविनाशफलं यन्त्रतोरणस्य पातम् अवधार्य स्थिरीकृत्य। उत्तुङ्गतोरणस्थानं तोरणस्य उच्चस्थानम्, आरूढेन प्राप्तेन। यन्त्रघटनस्य यन्त्रनिर्माणस्य बीजं हेतुभूतं लोहकीलकं लोहशङ्कुः। आदाय गृहीत्वा। तपस्वी वराकः।

(झ) वैरोचकपुरःसरैः वैरोचकप्रभृतिभिः पदातिलोकैः पादगमिजनैः। लोष्टैर्हत्वा इति लोष्टघातं। (णमुल् प्रत्यय व्यपदेशेनेदम्), हतः विनाशितः। दारुवर्मा इति शेषः।

(ञ) वत्सलेन स्नेहवता। वियुक्ताः विरहिताः।

राच। [सविषादम्।] तत् किमिदानीं कथयसि परितुष्टः "सर्वम् अनुष्ठितम्" इति।

विरा। अमात्य! कल्पितम् अनेन विषचूर्णमिश्रितम् औषधं चन्द्रगुप्ताय। तच्च प्रत्यक्षीकुर्वता चाणक्यहतकेन कनकभाजने वर्णान्तरम् उपगतम् उपलभ्य अभिहितः (ट) चन्द्रगुप्तः,— "वृषल! वृषल! सविषम् औषधं, न पातव्यम्" इति।

राच। शठः खलु असौ वटुः। अथ स वैद्यः कथम्। (ठ)

विरा। स खलु वैद्यः तदेव औषधं पायितः उपरतश्च। (ड)

राच। [सविषादम्।] अहह! महान् विज्ञानराशिः उपरतः (ढ) भद्र! अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम्। (ण)

विरा। आत्मविनाशः। (त)

राच। [सोद्वेगम्।] कथमिव?

विरा। स खलु मूर्खः तं युष्माभिः अतिसृष्टं महान्तम् अर्थराशिम् अवाप्य, महता व्ययेन उपभोक्तुम् आरब्धवान्। ततः "कुतोऽयं भूयान् धनागमः तव" इति पृच्छ्यमानोऽयं, यदा वाक्यभेदान् बहून् अकथयत्, तदा चाणक्यहतकादेशात् विचित्रेण वधेन व्यापादितः। (थ)

राच। [सोद्वेगम्।] कथम् अत्रापि वयमेव उपहता दैवेन? अथ शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्तुमस्मत्प्रयुक्तानां नरपति-

(ट) विषचूर्णेन मिश्रितं संयुक्तं। प्रत्यक्षं प्रत्यक्षं कुर्वन् तेन प्रत्यक्षीकुर्वता साक्षात् पश्यता। कनकभाजने स्वर्णपात्रे। वर्णान्तरं विभिन्नं वर्णं। उपगतं प्राप्तं। उपलभ्य विदित्वा।

(ठ) अथ कीदृशी दशा प्राप्त किमवस्थ इत्यर्थः।

(ड) पायितः राज्ञा इति शेषः। उपरतः पञ्चत्वं गतः।

(ढ) विज्ञानस्य चिकित्साविषयकज्ञानस्य राशिः समूहः।

(ण) शयनाधिकृतस्य शय्यारचनादिकार्ये नियुक्तस्य तदध्यक्षस्य। वृत्तं जातं।

(त) आत्मविनाशः आत्मनो निधनं। जातः इति शेषः।

(थ) सः प्रमोदकः। अतिसृष्टं प्रदत्तं। महान्तं विपुलं। अवाप्य लब्ध्वा। कुतः केन प्रकारेण जातः। पृच्छ्यमानः जिज्ञासितः। वाक्यभेदान् विविधानि वाक्यानि। विचित्रेण अद्भुतेन विस्मयकरेण वधेन वधोपायेन। व्यापादितः मारितः।

शयनगृहस्य अन्तःसुरङ्गायां निवसतां बीभत्सकादीनां को वृत्तान्तः? (द)

विरा। अमात्य! दारुणो वृत्तान्तः। (ध)

राक्ष। [सावेगम्।] कथं दारुणो वृत्तान्तः? न खलु विदिताः तत्र निवसन्तः चाणक्यहतकेन?

विरा। अथ किम्।

राक्ष। कथमिव।

विरा। प्राक् चन्द्रगुप्तप्रवेशात्, प्रविष्टमात्रेण एव शयनगृहे चाणक्येन दुरात्मना समन्ताद् अवलोकिते, ततस्तु एकस्माद् भित्तिच्छिद्राद् गृहीतभक्तावयवां निष्क्रामन्तीं पिपीलिकापङ्क्तिम् अवलोक्य, पुरुषगर्भमेतद् गृहमिति गृहीतार्थेन दाहितं तदन्तःशयनगृहम्। तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टयः प्रथममपिहितनिर्गमनमार्गम् अनधिगम्य सर्व एव बीभत्सादयः तत्रैव ज्वलनम् उपगता उपरताश्च। (म)

राक्ष। [साश्रम्।] सखे! पश्य, चन्द्रगुप्तस्य दैवसम्पदा (प) सर्व एव उपरताः। [सचिन्तम्।] सखे! दैवसम्पदं पश्य दुरात्मनः चन्द्रगुप्तहतकस्य! कुतः?

(द) उपरताः मृताः। प्रकृतं शिविरम्। नरपतिशयनगृहस्य राज्ञः शयनभवनस्य। अन्तःसुरङ्गायां सुरङ्गमध्ये। को वृत्तान्तः का वार्त्ता।

(ध) दारुणः मर्मघाती भीषण इत्यर्थः।

(म) प्राक् पूर्वं। समन्तात् सर्वतः। अवलोकिते दृष्टे। एकस्मात् अन्यतरात्। भित्तिच्छिद्रात् भित्तिस्थितात् रन्ध्रात्। गृहीताः भक्तानां अवयवाः यया तां गृहीतभक्तावयवां अवलम्बितान्नकणिकां। निष्क्रामन्तीं बहिरागच्छन्तीं। पुरुषाः गर्भे अभ्यन्तरे यस्य तत् पुरुषगर्भं अन्तःस्थितपुरुषं। गृहीतार्थेन विदितविषयेण चाणक्येनेति शेषः। दाहितं भस्मसात् कारितं। अन्तः अन्तःपुरे शयनाय यत् गृहं तत् अन्तःशयनगृहं। दह्यमाने भस्मीक्रियमाणे धूमेन अवरुद्धाः प्रतिरुद्धाः दृष्टयो येषां ते धूमावरुद्धदृष्टयः। अपिहितः धूमपटलेन आच्छादितः यो निर्गमनमार्गः निःसरणपथः तं। अनधिगम्य अप्राप्य। ज्वलनं अनलं। उपगताः प्राप्ताः। उपरताः मृताः।

(प) दैवसम्पदा भाग्योत्कर्षेण।

[प्रकाशम्] ततस्ततः ?

विरा। ततः चन्द्रगुप्तशरीरम् अभिद्रोग्धुम् अनेन व्यापारिता दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः। (म)

राक्ष। [सास्रम्] हा सखे! शकटदास! अयुक्तः तव अयम् ईदृशो मृत्युः। अथवा, स्वाम्यर्थम् उपरतो न शोच्यस्त्वमसि; (य) वयमेव अत्र शोच्याः, —ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः।

विरा। अमात्य! न एतदेव, स्वाम्यर्थ एव साधयितव्य इति प्रयतसे। (र)

राक्ष। सखे!—

अस्माकमसुमेवार्थमवलम्ब्य जिजीविषा।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते॥ २०॥

सखे! कथ्यताम् अपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जः अयम्। (ल)

विरा। तत एतद् उपलभ्य, चन्दनदासेन उपाकृतसाध्वसेन अपवाहितम् अमात्यकलत्रम्। (व)

कौटिल्य अत्यातिरित्यत। परिगतं चालितं—अत्यासु चालितं प्रचारितं प्रचलितमित्यर्थः। अग्रराज्याहर परिघटितराज्यार्द्धभागी पर्वतेश्वर. घातित विनाशितः। यस्य तव एकमपि बहुलप्रयुक्तमपि कौटिल्यो नीतिमार्गीयकौशलं महान् पूर्वोक्तरूपाणि फलानि परिणामो यस्य तस्य भावः—तां बहुफलतां बहुफलत्वनकत्व प्राप्नोति॥ १९

(म) अभिद्रोग्धुं हिंसितुं। अनेन शकटदासेन। व्यापारिताः प्रेरिताः। प्रख्याप्य घोषयित्वा।

(य) अयुक्तः अयोग्यः। ईदृशः एवंविधः अपघातरूपः। स्वाम्यर्थं प्रभुकार्यसाधनाय। उपरतः मृतः। शोच्यः शोकयोग्यः।

(र) एतत् जीवनं एवं स्वप्रभुकार्यमित्यर्थः। स्वाम्यर्थः प्रभुकार्यं। साधयितव्यः सम्पादयितव्यः। प्रयतसे चेष्टसे।

अस्माकमित्यादि। असुः तत्कार्यं यथै वैरनिर्यातनरूपप्रयोजनं अवलम्ब्य आश्रित्य अस्माकं जिजीविषा जीवनेच्छा। अतएव कृतघ्नैः अकृतज्ञैः अस्माभिः परलोकगतः लोकान्तरगत इव प्रभुः न अनुगम्यते॥ २०

(ल) सुहृदः मित्रस्य व्यसनं विपत् तस्य श्रवणे सुहृद्व्यसनश्रवणे तत्र सज्जः श्रवण व्यापृतं। सज्जः अवहितचित्तः।

(व) उपाकृतसाध्वसेन त्यक्तभयेन। अपवाहितं स्थानान्तरं नीतम्।

राक्ष। सखे ! क्रूरस्य चाणक्यवटोः विरुद्धम् अयुक्तम् अनुष्ठितं चन्दनदासेन ? (अ)

विरा। अमात्य ! ननु अयुक्ततरः सुहृद्द्रोहः । (च)

राक्ष। ततस्ततः ?

विरा। ततो याच्यमानेनापि यदा न समर्पितम् अनेन अमात्यकलत्रं, ततः कुपितेन चाणक्यवटुना—"

राक्ष। [ सोद्वेगं ] स खलु व्यापादितः ?

विरा। "—अमात्य ! न खलु व्यापादितः,—किन्तु गृहीतगृहसारः सपुत्रकलत्रः संयम्य बन्धनागारे निक्षिप्तः ।

राक्ष। ततः किं परितुष्टः कथयसि—"अपवाहितम् अनेन राक्षसकलत्रम्" इति ? ननु वक्तव्यं "संयतः सकलत्रो राक्षसः"(स) इति ।

[ प्रविश्य पटाक्षेपेण (ह) पुरुषः ] जअदु जअदु अज्जो । अज्ज ! एसो क्खु सअडदासो पडिहारभूमिमुवट्ठिदो । (१४)

राक्ष। प्रियंवदक ! अपि सत्यम् ?

प्रियं। अलीअं किं अमच्चपादोपजीविणो मन्तिदुं जाणन्ति ?(१५)

राक्ष। सखे ! विराधगुप्त ! किम् एतत् ?

विरा। अमात्य ! रक्षति खलु भव्यं भवितव्यता ।

राक्ष। प्रियंवदक ! यदि एवं, तत् किं चिरयसि ? क्षिप्रं प्रवेशय तम् ।

(१४) जयति जयति आर्यः । आर्य ! एष खलु शकटदासः प्रतिहारभूमिमुपस्थित ।

(१५) अलीक किम् अमात्यपादोपजीविनो मन्त्रयितुं जानन्ति ?

(अ) क्रूरस्य दारुणस्य । विरुद्धं प्रतिकूलं । अनुष्ठितं अनुष्ठानं आचरणं । अयुक्तं अनुचितमिति यावत् । अमङ्गलमाशङ्कितमसीति भावः ।

(च) सुहृद्द्रोह, मित्रहिंसा । अयुक्ततरः अतिनिन्दित. ।

(स) सकलत्रः सपत्नीक, राक्षसः संयत बद्ध.। कारारुद्धस्य सपत्नीकचन्दनदासस्य उद्धरणाय चाणक्यहस्ते आत्मसमर्पणस्यावश्यम्भावित्वात् चन्दनदासस्याप्युद्धारे हतप्रत्याशेति भावः ।

(ह) पटाक्षेपेण जवनिकां अपसार्य्य, तत्पार्श्वदेशेनेत्यर्थः ।

प्रियं। जं अमच्चो आणवेदि त्ति। (१६) [निष्क्रान्तः]

[ततः प्रविशति सिद्धार्थकेन अनुगम्यमानः शकटदासः]

शक। [दृष्ट्वा आत्मगतम्]।—

दृष्ट्वा मौर्य्यमिव प्रतिष्ठितपदं शूलं धरित्रीतले
तल्लक्ष्मीमिव चेतनाप्रमथिनीमुन्मुच्य वध्यस्रजम्।
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाघाततूर्य्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः॥ २१

[नाट्येन अवलोक्य सहर्षम्] अयम् अमात्यराक्षसः तिष्ठति। य एषः,—

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन्।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः॥ २२

[उपसृत्य] जयति अमात्यः।

(इति नाट्येन उपविष्टः)

राक्ष। [नाट्येन अवलोक्य सहर्षम्] सखे! शकटदास! दिष्ट्या कौटिल्यगोचरगतोऽपि दृष्टोऽसि, तत् परिष्वजस्व माम्। (क)

[शकटदासः तथा करोति]।

---

(१६) यदमात्य आज्ञापयति इति।

---

दृष्ट्वा मौर्य्यमिवेत्यादि। धरित्र्याः पृथिव्याः तले पृष्ठे भूपृष्ठे मौर्य्ये इव चन्द्रगुप्तमिव शूलं वध्यकीलकं प्रतिष्ठितपदं दृढस्थापितं दृष्ट्वा, तस्य चन्द्रगुप्तस्य लक्ष्मीं श्रियं इव चेतनाप्रमथिनीं चित्तविदारिणीं वध्यस्रजं वधस्य मालां रक्तमालां वध्या हि रक्तमाल्येन चिह्निता भवन्ति। उन्मुच्य विरहितं परिधाय। धातूनामनेकार्थत्वात्, उपसर्गेण विपरीतत्वाच्च अत्र परिधानमर्थः। स्वामिनो नन्दानां उपरोधवत् राज्यस्य सहृदयानिष्टवत् रौद्रा भीषणा अतएव विषमा कठिनतमा अघाताः वध्यस्थानं तान् तथोक्तान्। आघाततूर्य्यस्वनान् ताडितवाद्यशब्दान् श्रुत्वा आकर्ण्य मदीयं मनः चित्तं प्रथमाभिघातकठिनं प्रथमं पूर्व्वं अभिघातेन स्वाम्यनिष्टरूपताडनेन कठिनं कठोरं अतएव न ध्वस्तं भग्नं तथावाभीन्मर्ये। अत्र उपमालङ्कारः काव्यलिङ्गेन संसृष्टः। शार्दूलविक्रीडितं छन्दः॥ २१

अक्षीणभक्तिरित्यादि। नन्दे क्षीणे ध्वंसमाप्ते विलीने अपि इत्यर्थः। अक्षीणभक्तिः प्रभुरानुरागः य एष इति सम्बन्धः। स्वाम्यर्थं प्रभुकार्य्यं उद्वहन् धारयन् सम्पादयन्नित्यर्थः। पृथिव्यां धरण्यां स्वामिभक्तानां प्रभुसेवकानां परमे अनुपमे प्रमाणे दृष्टान्ते स्थितः अवस्थितः प्रभुभक्तानामग्रगण्योऽयमित्यर्थः॥ २२

(क) कौटिल्यस्य चाणक्यस्य गोचरगतः दृष्टिपथवर्त्ती। परिष्वजस्व—आलिङ्ग इत्यर्थः।

राच। [तं परिष्वज्य] इदम् आसनम्, आस्यताम्।

शक। यद् आज्ञापयति अमात्य।

[इति नाट्येन उपविष्ट]

राच। सखे! शकटदास! अथ कोऽयम् अस्य मे हृदयानन्दस्य हेतु? (ख)

शक। [सिद्धार्थकं निर्दिश्य] अमात्य! प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य वध्यस्थानाद् अपवाहितोऽस्मि। (ग)

राच। [सहर्षम्] भद्र सिद्धार्थक! कामम् अपर्य्याप्तम् इदम् अस्य प्रियस्य, तथापि गृह्यताम्। (घ) [इति स्वगात्राद् अवतार्य्य भूषणानि प्रयच्छति।]

सिद्धा। [गृहीत्वा पादयोर्निपत्य स्वगतम्।] एदं क्खु अज्जोवदेसेण करिस्सं। [प्रकाशम्] अमच्च! एत्थ मे पढमप्पविट्ठस्स णत्थि कोवि परिचिदो, जहिं एदं अमच्चस्स पसादं णिक्खिविअ णिव्वुदो भविस्सं, ता इच्छामि अहं इमाए मुद्दिआए मुद्दिदं अमच्चस्स ज्जेव भाण्डागारे णिक्खिविदुं, जदा मे एदिणा प्पओअणं भविस्सदि, तदा गेण्हिस्सं। (१७) (ङ)

राच। भद्र! भवतु, को दोष? शकटदास! एवं क्रियताम्।

शक। यद् आज्ञापयति अमात्य इति। [मुद्रां विलोक्य जनान्तिकम् (च)] अमात्य! भवन्नामाङ्किता इयं मुद्रा।

---

(१७) इदं खलु आर्योपदेशेन करिष्यामि। अमात्य! अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचित, यत्र इमम् अमात्यस्य प्रसादं निक्षिप्य निर्वृतो भविष्यामि, तदिच्छामि अहम् एतया मुद्रया मुद्रितम् अमात्यस्य एव भाण्डागारे निक्षेप्तुम्। यदा मम एतेन प्रयोजनं भविष्यति, तदा ग्रहीष्यामि।

---

(ख) हृदयानन्दस्य चित्ताह्लादकरस्य अस्य भवदागमनरूपकार्य्यस्य।

(ग) घातकान् मारकपुरुषान्। विद्राव्य तासयित्वा। अपवाहित अपसारित।

(घ) कामं यथेष्टं। अपर्य्याप्तं अननुरूपं अप्रचुरं। इदं भूषणम्।

(ङ) इदं पारितोषिकपदार्थं। प्रथमप्रविष्टस्य नवागतस्येत्यर्थ। प्रसाद अनुग्रहेण दत्तं अलङ्कारजातं। निर्वृत सुखी निश्चिन्त इत्यर्थ। एतया अग्रपटदर्शित उपायात् आभ्यन्तरीण मायया इत्यर्थं। एतेन अलङ्कारेण।

राक्ष। सखे शकटदास! अनया एव मुद्रया स्वाधिकारे व्यवहर्त्तव्यं भवता। (ट)

शक। यद् आज्ञापयति अमात्यः।

सिद्धा। अमच्च। विण्णवेमि किं पि। (२१)

राक्ष। भद्र! विश्रब्धं ब्रूहि।

सिद्धा। जाणादि ज्जेव अमच्चो, जधा चाणक्कहदअस्स विप्पिअं कदुअ, णत्थि मे पुणो पाड़लिउत्ते पवेसो त्ति, ता इच्छामि अह्म अज्जस्स ज्जेव सुप्पसण्णे पादे सेविदुं। (२२)

राक्ष। भद्र! प्रियं न, किन्तु त्वदभिप्रायपरिज्ञानेन अन्तरितोऽस्माकम् अनुनय। भद्र एव क्रियताम्। (ठ)

सिद्धा। [सहर्षम्] अणुग्गहिदोह्मि। (२३)

राक्ष। सखे शकटदास! विश्रामय सिद्धार्थकम्।

शक। यद् आज्ञापयति अमात्यः।

[इति सिद्धार्थकेन सह निष्क्रान्तः]

राक्ष। सखे विराधगुप्त! वर्णय इदानीं कुसुमपुरवृत्तान्तमशेषम्। अपि क्षमन्ते कुसुमपुरनिवासिनोऽस्मदुपजापं (ड) चन्द्रगुप्तप्रकृतय?

विरा। अमात्य! बाढं क्षमन्ते, ननु यथाप्रधानम् अनुगच्छन्ति एव। (ढ)

---

(२१) अमात्य। विज्ञापयामि किमपि।

(२२) जानात्येव अमात्यो, यथा चाणक्यहतकस्य विप्रियं कृत्वा, नास्ति मे पुनः पाटलिपुत्रे प्रवेश इति, तदिच्छामि अहम् अमात्यस्य एव सुप्रसन्नौ पादौ सेवितुम्।

(२३) अनुगृहीतोऽस्मि।

---

(ट) स्वाधिकारे निजनियोगे निजकर्त्तव्यसम्पादने इत्यर्थ।

(ठ) प्रियं प्रीतिजनकमित्यर्थं। तव अभिप्रायस्य अज्ञातत्वात्तदुपमनोदयस्य परिज्ञानेन अन्तरितम्। अन्तरित व्यवहित दूरीभूत इत्यर्थं। अनुनय प्रार्थना, एवं अनावश्यकम्।

(ड) वर्णय विस्तरेण कथय। कुसुमपुरवृत्तान्तं शेषं अवशिष्टांश। क्षमन्ते सहन्ते। अस्माभि कृत उपजाप परस्परभेद वम्।

(ढ) बाढं सत्यं। क्षमन्ते उपजापमिति शेष। प्रधानं अनतिक्रम्य यथाप्रधानं

राक्ष। सखे ! किं तत्र कारणम् ?

विरा। अमात्य ! इदं तत्र कारणम् ;—मलयकेतोः अपक्रमणात् प्रभृति पीड़ितः चन्द्रगुप्तेन चाणक्य इति ; चाणक्योऽपि जितकाशितयाऽसहमानः तैः तैः आज्ञाभङ्गैः चन्द्रगुप्तस्य चेतसः पीड़ाम् उपचिनोति, अयमपि मम अनुभवः। (थ)

राक्ष। [ सहर्षम् ] सखे विराधगुप्त ! तद्गच्छ त्वम् अनेन आहितुण्डिकच्छद्मना पुनः कुसुमपुरमेव। तत्र हि मे सुहृत् वैतालिकव्यञ्जनः स्तनकलसो नाम प्रतिवसति। स त्वया मद्वचनात् वाच्यः, यथा चाणक्येन क्रियमाणेषु आज्ञाभङ्गेषु चन्द्रगुप्तः त्वया समुत्तेजनसमर्थैः श्लोकैः उपश्लोकयितव्यः (त) इति। कार्यञ्च अतिनिभृतं (द) करभकहस्तेन सन्देष्टव्यम् इति।

विरा। यद् आज्ञापयति अमात्यः।

[ इति निष्क्रान्तः ]

पुरुषः। [ प्रविश्य ] जेदु जेदु अमच्चो। अमच्च ! सअड़दासो विण्णवेदि, एदे क्खु तिण्णि अलङ्कारविसेसा विक्कीअन्ति, ता पच्चक्खीकरेदु अमच्चो। (२४)

---

(२४) जयति जयति अमात्यः। अमात्य ! शकटदासो विज्ञापयति, एते खलु त्रयोऽलङ्कारविशेषा विक्रीयन्ते, तत् प्रत्यक्षीकरोतु अमात्यः।

---

रागादिकमित्यर्थः। अनुगच्छन्ति अनुसरन्ति अन्ये इति भावः। राजमन्त्रिणोर्भिन्नभावमवलोक्य अन्येऽपि भेदबुद्धिमवलम्बन्ते इत्यर्थः।

(थ) अपक्रमणात् पलायनात्। पीड़ितः व्यथितः। जितेन जयेन काशते इति जितकाशी तस्य भावः तया जितकाशितया जयशीलितया जयान्वितया इत्यर्थः। असहमानः सोढुमशक्नुवन् राजमन्त्रमिति भावः। आज्ञाभङ्गैः आदेशाकरणैः। चेतसः मनसः। पीड़ां व्यथां। उपचिनोति वर्द्धयति।

(त) वैतालिकव्यञ्जन—वैतालिकस्य मागधस्य व्यञ्जनं चिह्नं यस्य सः स्तुतिपाठकवेशधारी। वाच्यः वक्तव्यः। समुत्तेजने समुद्दीपने समर्थैः क्षमैः। श्लोकैः पद्यैः। उपश्लोकयितव्यः श्लोकैरुपस्तोतव्यः।

(द) अतिनिभृतं अतिगोपनम्।

# तृतीयोऽङ्कः ।

[ ततः प्रविशति कञ्चुकी ]

कञ्चु ।—

रूपादीन् विषयान् निरूप्य करणैः यैरात्मलाभस्त्वया

लब्धस्तेष्वपि चक्षुरादिषु हता स्वार्थावबोधक्रियाः ।

अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि ते

न्यस्तं मूर्ध्नि पदं तवैव जरया, तृष्णे ! मुधा माद्यसि ॥ १

[ परिक्रम्य आकाशे ] भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः ! सुगृहीतनामा देवः चन्द्रगुप्तो वः समाज्ञापयति । यथा,—"प्रवृत्त-कौमुदीमहोत्सवरमणीयतरं कुसुमपुरम् अवलोकयितुम् इच्छामि, तत् संस्क्रियन्ताम् अस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्य उपरि भूमयः" इति । तत् किं चिरयन्ति भवन्तः ? [ आकाशे आकर्ण्य ] किं ब्रूथ "आर्य ! किम् अविदित एवाय देवस्य चन्द्रगुप्तस्य कौमुदी-महोत्सवप्रतिषेधः" इति ? आः दैवोपहताः ! किम् अनेन वः प्राणहरेण कथोद्घातेन ? (क) शीघ्रम् इदानीम्,—

रूपादीनिति । यैः करणैः इन्द्रियैः "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः । रूप आदि यथा ते तान् रूपादीन् रूपरसगन्धस्पर्शशब्दान् विषयान् इन्द्रियग्राह्यपदार्थान् निरूप्य निश्चित्य यथार्थं त्वया भवत्या आत्मनः लाभः आत्मलाभः आत्मप्राप्तिः आत्मनः अस्तित्वनिर्णयः विषयविज्ञानमन्तरेण तृष्णोत्पत्तेरसम्भवादिति भावः । लब्धः प्राप्तः । चक्षुरादिषु नेत्रप्रभृतिषु तेषु इन्द्रियेषु स्वार्थाः निजार्थाः ये अर्थावबोधाः विषयग्रहणव्यापाराः त एव क्रियाः कार्याणि हताः व्याहताः विनिष्टाः इति यावत् सम्भवन्तीति शेषः । जराक्रान्तानां तेषां शक्तिरहितत्वादिति भावः । ते तव आज्ञाविधेयानि आदेशवर्त्तीनि वशवर्त्तीनि वशीभूतानि इत्यर्थः अङ्गानि हस्तपदाद्यवयवाः प्रसभं बलात् पटुतां दक्षतां कार्यक्षमत्वम् इति यावत् त्यजन्ति परिहरन्ति । आज्ञापालने शिथिलप्रयत्नानि जातानि । हे तृष्णे विषयभोगाभिलाषे ! जरया वार्द्धक्येन तवैव मान्यस्य ते आज्ञाकारिण्येकशत्रुकारार्थं मूर्ध्नि शिरसि पदं चरणं निहितं, तथा ते सर्वशक्तिविनाशितेत्यर्थः । मुधा वृथा निरर्थकमित्यर्थः माद्यसि दृप्यसि आत्मानं श्लाघ्यां अवलोकयसि । जरया ते कृतसर्वविनाशात् आत्मना दुर्बलताक्रान्ता इति भावः । अत्र प्रस्तुततृष्णाचमत्कृतायाः कस्याश्चित् दुष्टतामनवाप्तिकायाः प्रवर्त्तकप्रतीतेः कथा द्योतितत्वात् तथा अप्रस्तुतकारणं विना आत्मकौतुकं विभावनात् । शार्दूल-विक्रीडितं वृत्तम् ॥ १

(क) सुगाङ्ग नाम प्रासाद तत्र अधिकृताः नियुक्ताः सुगाङ्गप्रासादाधिकृताः सुगृहीत-नामा प्रातःस्मरणीयः "स सुगृहीतनामा स्यात् यः प्रातःस्मर्यते शुभैः" इत्यमरः । त

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रजः
सम्पूर्णेन्दुमयूखसंहतिरुचां सचामराणां श्रियः ।
सिंहासनधारणाच्च सुचिरं सञ्जातमूर्च्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥ २

[आकाशे] किं कथयन्ति भवन्तः "एते त्वरामहे" इति ? भद्राः ! त्वरध्वम्, अयमागत एव देवः चन्द्रगुप्तः (ख) य एषः,—

सुविस्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्य्येणोढा गुरुरपि भुवो याऽस्य गुरुणा ।
धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वात् स्खलति न च, दुःखं वहति च ॥ ३

गुणान् । समावर्त्तयति समादिशति । ग्रहणा वर्जनीयता या कौमुदी आरवीयोद्यमाणो मम यी महोत्सव. आनन्दमहव्यापारः तेन रमणीयतरं मनोहरतरं । संक्रियतां समलंक्रियतां । अवसर्पणयोग्यः माद्यमजनस्य दर्शनीयपृष्ठा । चिरयति विलम्बते । अविदितः अज्ञातः । अयं वाक्यव्यालुठित । दैवोपहता, दुर्भाग्यपीडिताः । सम्बोधनपदमेतत् । युः युष्माक । प्राणहरेण राज्ञः अनभिमतत्वात् कथायाः बाधकत्वं । कथोद्घातेन कथोपकथनेन ।

आलिङ्गन्तु इत्यादि । सम्पूर्णस्य परिपूरितस्य इन्दोश्चन्द्रस्य ये मयूखाः किरणाः तेषां संहतयः समवायाः तासां रुचिव रुचयः कान्तयो येषां तानि तेषां सम्पूर्णेन्दुमयूखसंहतिरुचां पूर्णचन्द्रकान्तीनां प्रतिभाभासितवर्णैः सचामराणां चामरसहितानां श्रियः सौन्दर्याणि कर्तृभूतानि, गृहीता, आदत्ता, धूपसुरभयः धूपसौरभाः यैः तान् गृहीतधूपसुरभीन् धृतधूपगन्धान् पिनद्धस्रजः बद्धमाल्यान् स्तम्भान् प्रासादस्येति शेषः । आलिङ्गन्तु परिरभन्तां । सुचिरं दीर्घकालं व्याप्य सिंहासनस्य सिंहचिह्नितस्य आसनस्य धारणात् वहनात् सञ्जातमूर्च्छामिव विगतचेतनामिव गां पृथिवीं सकुसुमः सपुष्पः चन्दनवारिणा सेकः मलयजजलसिक्तं मिव शीघ्रं अनुगृह्णातु दयया चैतन्यमापादयतु महीमित्यर्थः ॥ अत्रालिङ्गनादिवाक्यं प्राणान् समस्तिङ्गतया च समासोक्तिः, तथा मयूखसंहतिरुचां इति लुप्तोपमा तथा सिंहासने तिलामिति च, ते च । तथा मूर्च्छामिवेत्युत्प्रेक्षा इत्येषां परस्परसंसर्गः । शार्दूलविक्रीडितं वृत्तम् ॥ २

[नेपथ्ये] हत हतो देवः। (ग)

[ततः प्रविशति राजा प्रतीहारी च]

राजा। [स्वगतम्] राज्यं हि नाम राजधर्मानुवृत्तिपरतन्त्रस्य भूपतेः महदप्रीतिस्थानम्। (घ) यतः,—

परार्थानुष्ठाने जड़यति नृपं स्वार्थपरता,
परित्यक्तान्यार्थो नियतमयथार्थः क्षितिपतिः।
परार्थश्चेत् स्वार्थादभिमततरो, हन्त परवान्,
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः॥ ४

अपिच। दुराराध्या हि राजलक्ष्मीः आत्मवद्भिः अपि (ङ) राजभिः। कुतः?—

इपि दुःखेन न त्यजतीत्यर्थः। यथा कश्चित् भारवाही बलीवर्दादिः उच्चावचेषु अपि मार्गेषु गुरुभारमपि दुर्वहं यं भारं वहति। मध्ये वयसि वर्त्तमानः कश्चित् जातदन्तः बलीवर्दः तमेव भारं वहन् किञ्चित् श्रान्तोऽपि दुःखेन न त्यजति तद्वद्यमपीत्यर्थः। अत्र समासोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ २

(ग) हतः हतः कष्टं हिंसीत्यर्थः।

(घ) राज्ञो धर्मः राजधर्मः यथाशास्त्रं प्रजापालनादिकं तस्य अनुवृत्तिः अनुसरणं एव परं प्रधानं तन्त्रं यस्य तस्य राजधर्मानुवृत्तिपरतन्त्रस्य राजकार्य्यपरायणस्य—

न्यायेनार्ज्जनमर्थस्य वर्द्धनं पालनं तथा।
सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥
अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति॥

इत्यादि शास्त्रानुसारेण सम्यक् पालयतः राज्ञः महत् अत्यर्थं अप्रीतिस्थानं दुःखास्पदं।

परार्थानुष्ठाने इत्यादि। स्वार्थपरता निजकार्य्यसाधनप्रवृत्तिः परार्थानुष्ठाने परार्थसम्पादनविषये नृपं राजानं जड़ीकरोति स्तब्धीकरोति विमूढयतीत्यर्थः। परित्यक्तः परिवर्ज्जितः अन्यस्य अर्थः येन सः परित्यक्तान्यार्थः परित्यक्तपरप्रयोजनः क्षितिपतिः राजा नियतं निश्चितं अयथार्थः—यथाभूतः अर्थो यस्य स यथार्थः न यथार्थः अयथार्थः अन्वर्थकनामा, पालनाभावात्। चेत् यदि परार्थः अन्यदीयकार्य्यं स्वार्थात् स्वकार्य्यात् अभिमततरः इष्टतरः अत्यर्थमभिमतः स्यादिति शेषः। हन्त खेदे तर्हि भवति शेषः। परवान् पराधीनः। परायत्तः परतन्त्रः अन्यवशीभूतः पुरुषः जनः प्रीतेः सन्तोषस्य रसं स्वादं "रसो गन्धो रसः स्वादे" इति विश्वः। कथमिव केन प्रकारेण वेत्तु जानातु॥ शिखरिणी वृत्तम्॥ ४

(ङ) प्रशस्तः आत्मा येषां ते आत्मवन्तः तैः आत्मवद्भिः जितेन्द्रियैरित्यर्थः। दुराराध्या दुष्करसेव्या, दुःखेनापि प्रसादयितुं न शक्यते इत्यर्थः।

तीक्ष्णादुद्विजते, मृदौ परिभवत्रासान्न सन्तिष्ठते,
मूर्खान् द्वेष्टि, न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो!
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्य्या भृशम्॥ ५

अन्यच्च। कृतककलहं कृत्वा, स्वतन्त्रेण त्वया कञ्चित् कालं व्यवहर्त्तव्यमित्यार्य्योपदेशः, स च कथमपि मया पातकम् इवाभ्युपगतः, अथवा शश्वद् आर्य्योपदेशसंस्क्रियमाणमतयः सदा एव अस्वतन्त्रा वयम्। (च) कुतः?—

इह हि रचयन् साध्वीं शिष्यः क्रियां न निवार्य्यते,
त्यजति तु यदा मार्गं मोहात् तदा गुरुरङ्कुशः।
विनयरुचयस्तस्मात् सन्तः सदैव निरङ्कुशाः,
परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः॥ ६

तीक्ष्णादित्यादि। श्रीः लक्ष्मीः तीक्ष्णात् उग्रात् जनात् उद्विजते उद्विग्ना भवति कदाचित् नाशमभियेति भावः। मृदौ कोमलस्वभावे जनाश्रीये इत्यर्थः परिभवत्रासात् पराभवागमभयात् न सन्तिष्ठते चिरं स्थिरं न तिष्ठति इति शेषः। मूर्खान् जडान् निर्विवेकानित्यर्थः द्वेष्टि प्रद्युवत् त्यजते। अत्यन्तविद्वत्सु अतिधीरेषु प्रणयितां प्रीतिं न गच्छति न भजते कदाचित् वैराग्ये च त्यजेदितिभियेत्यर्थः। शूरेभ्यः वीरेभ्यः अधिकं अत्यर्थं बिभेति त्रस्यति। एकान्तभीरून् अति भीतान् नित्यशङ्कितानित्यर्थः। उपहसति परिहसति अहो आश्चर्य्ये। लब्धप्रसरा प्राप्ताधिकारा वेशवनिता वारवनिता इव भृशमत्यर्थं दुःखोपचर्य्या कष्टसेव्या सर्व्वथा दुराराध्या इत्यर्थः। अनेकस्या श्रिय "उद्विजते" इत्यादि बहुक्रियाकर्तृत्वात् दीपकालङ्कारः स च उपमया सङ्कीर्य्यते। शार्दूलविक्रीडितं वृत्तम्॥ ५

(च) कृतककलहं कृत्रिमविवादं। स्वतन्त्रेण स्वाधीनेन। कालमिति व्याप्त्यर्थे द्वितीया। व्यवहर्त्तव्यं अवस्थातव्यं। कथमपि अतिदुःखेन। पातकं पापं। अभ्युपगतः स्वीकृतः। शश्वत् सततं। आर्य्यस्य माननीयचाणक्यस्य उपदेशेन शासनेन संस्क्रियमाणा संशोध्यमाना मतिर्बुद्धिर्येषां ते तथोक्ताः।

इह हि रचयन्नित्यादि। इह अत्र जगति शिष्यः छात्रः साध्वीं शुभां न्याय्यामित्यर्थः क्रियां कार्य्यं रचयन् अनुतिष्ठन् न निवार्य्यते निषिध्यते गुरुणेति शेषः। यदा यत्काले मोहात् अज्ञानात् बुद्धिभ्रंशात् मार्गं पन्थानं सदाचारमित्यर्थः। त्यजति परिहरति, तदा तत्काले गुरुः शिक्षकः अङ्कुशः अङ्कुशवन्नियन्ता भवतीति शेषः। तस्मात् विनी मुविनाया अभिर्वेचो ते विनयरुचयः विनीताः सुशिक्षिताः इत्यर्थः। सन्तः सततमेव सज्जनाः निरङ्कुशाः नियन्तारहिताः स्वाधीनाः भवन्तीति शेषः। अतः अस्मात् कारणात् परतरं परवशम् कालं व्याप्य वयं स्वातन्त्र्येभ्यः स्वाधीनताभ्यः पराङ्मुखाः विमुखाः भवाम

[प्रकाशम्] आर्य्य ! वैहीनरे ! सुगाङ्गप्रासादमार्गम् आदेशय ।

कञ्चु। इत इतो देव. ।

राजा। [परिक्रामति।]

कञ्चु। [परिक्रम्य।] अयं सुगाङ्गप्रासादः, शनैः आरोढुमर्हति आर्य्य. ।

राजा। [नाट्येन आरुह्य दिशोऽवलोक्य।] अहो। शरत्समयसम्भृत शोभाविभूतीनां दिशाम् अतिरमणीयता ! (छ) कुतः ?—

शनैः श्यामीभूताः सितजलधरच्छेदपुलिनाः,
समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः ।
चिताः चित्राकारैर्निशि विकचनक्षत्रकुमुदैः
नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः ॥ ७

अपिच,—

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपदं,
दधत्या शालीनामवनतिमुदारे सति फले ।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो ।
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥ ८

इति शेष । अधुना आर्य्योपदेशेन कियत्कालं स्वाधीनतया नीत्वा तत ऊर्ध्वं पराधीनतया कालं नेष्यामीत्यर्थः । अत्र हरिणीछन्दः । "न समरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ॥ ६

(छ) शरत्समयेन शरत्कालेन सम्भृता परिवर्द्धिता शोभाविभूतय सौन्दर्य्यसम्पद यासां तासां दिशाम् ।

शनै श्यामीभूता इत्यादि । सिता शुभ्रा ये जलधरच्छेदा मेघखण्डा ते पुलिनानीव यासां ता तथोक्ता । शनैर्मन्दं मन्दम् अश्यामा श्यामा भूता श्यामीभूता विगन्धा इत्यर्थ । कलविरुतिभि अव्यक्तमधुरारवै सारसकुलै समन्तात् परित आकीर्णा परिव्याप्ता । निशि रात्रौ चित्राकारैर्मनोरमाकारै विकचानि प्रस्फुटानि नक्षत्राणि कुमुदानीव तै तथोक्तै चिता व्याप्ता दीर्घा मेघावरणराहित्यात् सर्वत्प्रतीयमाना दशदिश समस्ता आशा सरित इव नद्य इव नभस आकाशात् स्यन्दन्ते चरन्ति बहिरागच्छन्तीत्यर्थ । अत्र उत्प्रेक्षालङ्कार । शिखरिणीवृत्तम् ॥ ७ ॥

अपामित्यादि । उद्वृत्तानां प्रवृद्धानां वेलातिगानामित्यर्थं कुपथप्रवृत्तानाञ्च अपां जलानां निजं स्वकीयं स्थितिपदं अवस्थानस्थानं पक्षे प्रकृतस्थानञ्च, उपदिशन्त्या आदिशन्त्या उदारे महति "उदारो दातृमहतो" रित्यमर । फले शस्ये पक्षे विद्यादिरूप सति शालीनां धान्यविशेषाणां अवनतिं शिरोऽवनमनम् पक्षे विनयञ्च दधत्या जनयन्त्या मयूराणां

अपि च,—

भर्त्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गं कथञ्चिदवतार्य्य तनूभवन्तीम् ।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥ ८

[ समन्तात् मार्गं न अवलोक्य । ] अये ! कथम् अप्रवृत्तकौमुदीमहोत्सव (ज) कुसुमपुर पश्यामि ? आर्य्य ! वैहीनरे ! अथ त्वया अस्मद्वचनाद् आघोषित कुसुमपुरे कौमुदीमहोत्सवः ?

कञ्चु । देव ! अथ किम् । आघोषितो देवस्य आज्ञया कुसुमपुरे कौमुदीमहोत्सव । !

राजा । आर्य्य ! तदेव किं न परिगृहीतम् अस्मद्वचन पौरजनेन ?

कञ्चु । [कर्णौ पिधाय ।] देव ! शान्तं पापं, शान्तं पाप, पृथिव्याम् अस्खलितपूर्वं देवस्य शासनं, (झ) कथं पौरेषु स्खलितम् अर्हति ?

राजा । आर्य्य ! वैहीनरे ! तत् कथम् अप्रवृत्तकौमुदीमहोत्सवम् अधुनाऽपि कुसुमपुरं पश्यामि ? पश्य,—

धूर्त्तैरन्वीयमानाः स्फुटचतुरकथाकोविदैर्वेशनार्य्यो
नालङ्कुर्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः ।
अन्योन्यं स्पर्द्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः,
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्वणं पौरमुख्याः ॥ १०

कञ्चु । देव । एवमेतत् ।

राजा । किमेतत् ?

कञ्चु । देव ! अत इदम्—" ।

राजा । आर्य्य ! स्फुटमभिधीयताम् ।

कञ्चु । "—देव ! प्रतिषिद्धः कौमुदीमहोत्सवः ।

राजा । [सक्रोधम् ।] आः केन ?

कञ्चु । न अतः परम् अस्माभिर्देवो विज्ञापयितुं शक्यते ।

राजा । न खलु आर्य्येण चाणक्येन अपहृतः प्रेक्षकाणाम् अतिशयरमणीयः चक्षुषो विषयः ? (ञ)

कञ्चु । देव । कोऽन्यो जीवितुकामो (ट) देवस्य शासनम् उल्लङ्घयिष्यति ?

राजा । शोणोत्तरे । उपवेष्टुम् इच्छामि ।

प्रती । देव ! एदं सिंहासणं, उपविसदु देवो ।" (१)

---

( १ ) देव । एतत् सिंहासनम् । उपविशतु देवः ।

---

धूर्त्तैरित्यादि । स्फुटं व्यक्तं यथा तथा चतुरकथासु वाक्यश्लेषु कोविदैः पण्डितैः तैः स्फुटचतुरकथाकोविदैः सुस्पष्टवाक्यचातुरीनिपुणैः धूर्त्तैः शठैः अन्वीयमानाः अनुगम्यमानाः वेशनार्य्यः वारवनिताः पृथुजघनस्य विशालनितम्बस्य यो भरः गुरुत्वमित्यर्थः । तेन या आक्रान्तिः आक्रमणं तया मन्दैः मन्थरैः पृथुजघनभराक्रान्तिमन्दैः विपुलनितम्बभराक्रमं प्रयातैर्गमनैः रथ्याः राजमार्गान् न अलङ्कुर्वन्ति शोभयन्ति । किञ्च स्वामिनः धनसम्पन्नाः पौरमुख्याः प्रधानाः पौराः गृहविभवैः भवनस्थिताभिः वस्त्राभरणादिरूपसम्पद्भिः अन्योन्यं परस्परं स्पर्द्धमानाः जेतुमभिलषन्तः मुक्तशङ्काः भीतिभयाः स्त्रीभिः रमणीभिः साकं सह अभिलषितं वाञ्छितं पार्वणं पर्वसमयोचितं विधिं विधानं व्यापारं तदुपयोगिकार्य्यजातमित्यर्थः । न भजन्ते सेवन्ते अनुतिष्ठन्तीत्यर्थः । स्रग्धरावृत्तम् ॥ १०

( ञ ) प्रेक्षकाणां दर्शकानां । अतिशयरमणीयः परमसुन्दरः । चक्षुषोर्विषयः द्रष्टव्यपदार्थः । अपहृतः प्रतिषिद्धः ।

( ट ) जीवितुं कामः इच्छा यस्य स जीवितुकामः जीवनाभिलाषी । उल्लङ्घयिष्यति अतिक्रमिष्यति ।

राजा। [ गाम्भेन उपविश्य । ] आर्य्य । वैहीनरे । आर्य्यचाणक्यं द्रष्टुम् इच्छामि।

कञ्चु.। यदाज्ञापयति देवः। [ इति निष्क्रान्तः। ]

[ ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयन् चाणक्यः। ]

चाण। [ आत्मगतम्। ] कथं स्पर्द्धते मया सह दुरात्मा राक्षसहतकः ॥ कुतः ?—

कृतागाः कौटिल्यो भुजग इव निर्याय नगरात्,
यथा नन्दं हत्वा नृपतिमकरोत् मौर्य्यवृषलम्।
तथाहं मौर्य्येन्दोः श्रियमपहरामीति कृतधीः,
प्रभावं मद्बुद्धेरतिशयितुमेव व्यवसितः ॥ ११

[ प्रत्यक्षवद् आकाशे लक्ष्यं बद्ध्वा। ] राक्षस । राक्षस ! विरम्यताम् अस्माद् दुर्व्यवसितात्। (ठ)

उत्सिक्तः कुसचिवदृष्टराज्यतन्त्रो,
नन्दोऽसौ न भवति चन्द्रगुप्त एषः।
चाणक्यस्त्वमपि च नैव केवलं ते,
साधर्म्यं मदनुकृतेः प्रधानवैरम् ॥ १२

[ विचिन्त्य। ] अथवा, न अतिमात्रम् अस्मिन् वस्तुनि मया मनः खेदयितव्यम्। कुतः ?—

कृतागा इत्यादि। कृतं नन्देरगुहितं नाम अपराधमनेनेत्यस्य पदस्य अथ स कृतागाः कृतापराधः कौटिल्यः भुजग इव भुजङ्गम इव नगरात् पुरात् निर्याय निर्गत्य नन्दं हत्वा निपात्य यथा मौर्य्यवृषलं चन्द्रगुप्तं नृपतिं राजानं अकरोत् विदधे। तथा अहं मौर्य्येन्दोः मौर्य्यकुलचन्द्रस्य चन्द्रगुप्तस्य श्रियं राजलक्ष्मीं अपहरामि अपहरिष्यामि इति कृतधीः निश्चितबुद्धिः एषः राक्षसः मद्बुद्धेः प्रभावं प्रकर्षं अतिशयितुम् अतिक्रमितुम् व्यवसितः उद्युक्तः ॥ अत्र उपमालङ्कारः। शिखरिणी वृत्तम् ॥ ११ ॥

(ठ) दुर्व्यवसितात् असदुद्योगात्।

मद्भृत्यैः किल नाम पर्वतसुतो व्याप्य प्रविष्टान्तरैः,
उद्युक्ताश्च नियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः।
कृत्वा सम्प्रति कौतवेन कलहं मौर्येन्दुना, राक्षसं
भेत्स्यामि स्वमतेन, भेदकुशलो ह्येष प्रतीपं द्विषः॥ १३

कञ्चुकी। [ प्रविश्य। ] कष्टा खलु सेवा नाम! कुतः?—
भीतत्वं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभात्,
अन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः,
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः॥ १४

[ परिक्रम्य अवलोक्य च। ] इदम्, आर्यचाणक्यस्य गृहं यावत् प्रविशामि। [ नाट्येन प्रविश्य अवलोक्य च। ] अहो! राजाधिराजमन्त्रिणो विभूतिः!! (ड) कुतः?—
उपलशकलमेतद् भेदकं गोमयानां,
बटुभिरुपहृतानां बर्हिषां स्तोम एषः।
शरणमपि समिद्भिः शुष्यमाणाभिराभिः,
विनमितपटलान्तं दृश्यते जीर्णकुड्यम्॥ १५

मद्भृत्यैरित्यादि। प्रविष्टान्तरैः लब्धप्रवेशैः अन्तरे छिद्रान्वेषणेऽपि वा मद्भृत्यैः मदनुचरैः पर्वतकस्य पर्वतेश्वरस्य सुतः मलयकेतुः व्याप्य परिवृतः। तथा सिद्धार्थकाद्याः सिद्धार्थकप्रमुखाः स्पशाः गूढचराः नियोगसाधनविधौ कार्यसम्पादनविषये उद्युक्ताः सन्नद्धाः। सम्प्रति अधुना मौर्येन्दुना चन्द्रगुप्तेन सह कौतवेन व्याजेन मिथ्या कलहं विरोधं कृत्वा उत्पाद्य स्वमतेन निजबुद्ध्या प्रतीपं प्रतिकूलं राक्षसं द्विषं शत्रुं मलयकेतोः भेत्स्यामि पृथक् करिष्यामि, हि यतः एष चाणक्यः भेदकुशलः भेदनीतिनिपुणः। अत्र भेदनीत्या पराभवः सूचितः इति भावः। अत्र शार्दूलविक्रीडितं वृत्तम्॥१३

भीतत्वमित्यादि। नृपतेः भूपालात्, ततः सचिवतः प्रधानामात्यात्, ततः राज्ञः वल्लभात् प्रियजनात्, तथा अस्य राज्ञः भवने आवासे लब्धप्रसादाः प्राप्तानुग्रहाः ये विटाः धूर्ताः वसन्ति तेभ्यः अन्येभ्यश्च भीतत्वं आशङ्क्य। दैन्यात् दीनभावात् कार्यसिद्धार्थमित्यर्थः। पिण्डार्थं अन्नग्रासार्थं उन्मुखदर्शनापलपनैः—उन्मुखं सदैन्यं यथा तथा दर्शनानि वीक्षणानि तथा अपलपनानि नृपतिप्रीत्यर्थं मिथ्याकथनानि तैः आयस्यतः आयासं खेदं कुर्वतः श्रमयत इति शेषः। लाघवकारिणीं हीनत्वविधायिनीं गौरवनाशिनीमिति यावत् सेवां वृत्तिं कृतधियः पण्डिताः विदुः जानन्ति इति स्थाने युक्तं "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। श्ववृत्तिमित्यत्र उपमावस्तुस्वरूपा निदर्शना॥१४

(ड) राजाधिराजस्य सार्वभौमचक्रवर्तिनः मन्त्री सचिवः। विभूतिः सम्पदिति।

उपलशकलमित्यादि। एतत् दृश्यमानं उपलशकलं प्रस्तरखण्डं गोमयानां शुष्कगोमयानां भेदकं

चाण। [साटोपम् अवलोक्य।] वैहीनरे! किम् आगमनप्रयोजनम्?

कञ्चु। आर्य! प्रणतिसम्भ्रमसमुच्चलितभूमिपालमौलिमणिशकलशिखापिशङ्गीकृतपादपद्मयुगलः पादपद्मयोः आर्यं प्रणिपत्य देवः चन्द्रगुप्तो विज्ञापयति, क्रियान्तरान्तरायम् अन्तरेण आर्यं (ण) द्रष्टुम् इच्छामि इति।

चाण। वृषलो मां द्रष्टुम् इच्छति? वैहीनरे! न खलु वृषलस्य श्रवणपथमुपगतोऽयं (त) मया कृतः कौमुदीमहोत्सवप्रतिषेधः?

कञ्चु। आर्य! अथ किम्?

चाण। [सक्रोधम्।] आः! केन कथितम्?

कञ्चु। [भयं नाटयित्वा] प्रसीदतु आर्यः। स्वयमेव सुगाङ्गप्रासादशिखरगतेन देवेन अवलोकितम् अप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्।

चाण। आः ज्ञातं, तिष्ठ तावद् भवद्भिः एव मदन्तरेण प्रोत्साह्य रोषितो (थ) वृषलः, किम् अन्यत्?

कञ्चु। [सभयं तूष्णीम् अधोमुखस्तिष्ठति।]

चाण। अहो! राजपरिजनस्य चाणक्यस्य उपरि विद्वेषपक्षपातः (द)। अथ क्व वृषलः तिष्ठति?

कञ्चु। [भयं नाटयन्।] आर्य! सुगाङ्गप्रासादगतेन देवेन अहम् आर्यपादमूलं प्रेषितः।

---

सौभाग्यकं सकलधाम सूर्यस्य सर्वगामि सर्वेषां धाम तेजः धाम्ना स्वतेजसा अतिशाययति अतिशय्य तिष्ठति अभिभवतीत्यर्थः। अत्र व्यतिरेकालङ्कारः। वसन्ततिलकं वृत्तम्॥ १०

(ण) प्रणतौ प्रणामे सम्भ्रमेण त्वरया समुच्चलितानि भूमिपालमौलिशिखराणि यानि मणिशकलानि माणिक्यखण्डानि तेषां शिखाभिः कान्तिभिः पिशङ्गीकृतं पिङ्गलवर्णीकृतं पादपद्मयुगलं यस्य स तथोक्तः। आर्यं भवन्तं। विज्ञापयति निवेदयति। क्रियान्तरस्य अन्यकार्यस्य अन्तरायं विघ्नं क्रियान्तरान्तरायं तं अन्तरेण विना, यदि कार्यान्तरस्य विघ्नो न भवेदित्यर्थः।

(त) श्रवणस्य पन्थाः श्रवणपथः, तं। उपगतः प्राप्तः।

(थ) ज्ञातं विदितं। मदन्तरेण मां विना, मम अनुपस्थितिकाले इत्यर्थः। प्रोत्साह्य उत्साहवचनैरुद्दीप्य। रोषितः कोपितः।

(द) विशिष्टः द्वेषः विद्वेषः विद्वेषपूर्णः पक्षपातः विद्वेषपक्षपातः।

चाण। [ सव्याज ]। कञ्चुकिन्। सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु। इत इत आर्य्यः। [ इति उभौ परिक्रामतः। ]

कञ्चु। अयं सुगाङ्गप्रासादः, शनैः आरोढुमर्हति आर्य्यः।

चाण। नाट्येन आरुह्य अवलोक्य च सहर्षम् आत्मगतम्। अये! सिंहासनमध्यास्ते वृषलः। साधु साधु।—

नन्दैर्वियुक्तमनपेक्षितराजवृत्तै-
रध्यासितञ्च वृषलेन वृषेण राज्ञाम्।
सिंहासनं सदृशपार्थिवसङ्गतञ्च,
प्रीतिं परां प्रगुणयन्ति गुणा ममैते॥ १८॥

[ उपसृत्य ]। विजयतां वृषलः। (घ)

राजा। [ सिंहासनादुत्थाय चाणक्यस्य पादौ गृहीत्वा। ] आर्य्य! चन्द्रगुप्तः प्रणमति।

चाण। [ पाणौ गृहीत्वा। ] उत्तिष्ठोत्तिष्ठ वत्स।—

आ शैलेन्द्राच्छिलान्तस्खलितसुरधुनीशीकरासारशीतात्,
आ तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य।
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां,
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः॥ १९॥

नन्दैरित्यादि। अनपेक्षितानि तुच्छीकृतानि राजवृत्तानि यैस्तैः अनपेक्षितराजवृत्तैः, तैः अनाहृतराजधर्मैः इत्यर्थः। नन्दैः वियुक्तं विरहितं, राज्ञां भूपालानां वृषेण श्रेष्ठेन वृषलेन चन्द्रगुप्तेन अध्यासितम् अधिरूढं सिंहासनं राजासनं सदृशपार्थिवसङ्गतं अनुरूपभूपति समन्वितं। आतमिति शेषः। एते गुणाः मम परां प्रकृष्टां प्रीतिं आनन्दं प्रगुणयन्ति वर्द्धयन्ति। अत्र समालङ्कारः। मम स्वादानुरूपेण श्लाघा यौग्यस्य सम्पन्न। इति हर्षध्वनिः। वसन्ततिलकं वृत्तम्॥ १८

( घ ) विजयतां सर्वोत्कर्षेण वर्त्तताम्॥

आ शैलेन्द्रादित्यादि। शिलान्तात् प्रस्तरप्रान्तात् स्खलितायाः निर्गतायाः सुरधुन्याः शीकरासारैः अम्बुकणवर्षैः शीतात् शीतलात् आ शैलेन्द्रात् शैलेन्द्रं हिमालयं आरभ्य। नैकरागाणां बहुवर्णानां स्फुरितमणीनां दीप्तिमन्माणिक्यानां रुचः कान्तिर्यत्र स, तथोक्तस्य दक्षिणार्णवस्य दक्षिणसागरस्य आ तीरात् तीरं पर्य्यन्तं आरभ्य भीतिप्रणतनृपशतैः भयावनतराजशतैः आगत्य आगत्य तव चरणयुगस्य पदद्वयस्य अङ्गुलीरन्ध्रभागाः अङ्गुलीविवरप्रदेशाः शश्वत् निरन्तरं चूडारत्नानां शिरोमणीनां अंशवः किरणाः गर्भे अन्तः येषां ते चूडारत्नांशुगर्भाः मुकुटमणिमयूखप्रदीपितान्तराः क्रियन्तां विधीयन्तां। स्रग्धरा वृत्तम्॥ १९

राजा। आर्य्यप्रसादाद् अनुभूयत एवैतत्। (न) उपविशतु आर्य्यः। [इति उभौ यथासनम् उपविष्टौ]।

चाण। वृषल! किमर्थं वयम् आहूताः?

राजा। आर्य्यस्य दर्शनेन आत्मानम् अनुग्राहयितुम्।

चाण। [स्मितं कृत्वा।] वृषल! अलम् अनेन प्रश्रयेण, न निष्प्रयोजनम् अधिकारवन्तः प्रभुभिः आहूयन्ते, (प) तत् प्रयोजनम् अभिधीयताम्।

राजा। आर्य्य! कौमुदीमहोत्सवप्रतिषेधस्य किं फलम् आर्य्यः पश्यति?

चाण। [स्मितं कृत्वा।] वृषल! उपालब्धुं (फ) तर्हि, वयम् आहूताः?

राजा। आर्य्य! न उपालब्धुम्।

चाण। किं तर्हि?

राजा। विज्ञापयितुम्। (ब)

चाण। वृषल! यदि एवं तर्हि विज्ञापनीयानाम् अवश्यं शिष्येण रुचयोऽनुरोद्धव्याः। (भ)

राजा। आर्य्य! कः सन्देहः? किन्तु न कदाचिदपि आर्य्यस्य निष्प्रयोजना प्रवृत्तिः, इति अस्ति नः प्रश्नावकाशः। (म)

चाण। वृषल! सम्यग्गृहीतवानसि मदाशयम्। न हि प्रयोजनम् अनपेक्षमाणः स्वप्नेऽपि चाणक्यः चेष्टते। (य)

(न) आर्य्यप्रसादात् महामात्यस्य भवतोऽनुग्रहात्। एतत् प्रार्थितप्रभुत्वम्।

(प) प्रश्रयेण विनयेन। निष्प्रयोजनं निरर्थकं। अधिकारवन्तः अधिकृता मन्त्रिणः। आहूयन्ते आकार्य्यन्ते।

(फ) उपालब्धुं तिरस्कर्त्तुं भर्त्सयितुं।

(ब) विज्ञापयितुं विशेषेण ज्ञापयितुं बोधयितुं विशेषकथनावगमनार्थम्।

(भ) विज्ञापनीयानां महामात्यानां गुरूणां। रुचयः अभिलाषाः अनुरोद्धव्याः अनुसर्त्तव्याः, न तु व्याहन्तव्याः इत्यर्थः।

(म) निष्प्रयोजना प्रयोजनरहिता प्रवृत्तिः कार्य्यप्रवृत्तिः। इति अनेन हेतुना प्रश्नावकाशः अनुयोगावसरः।

(य) सम्यक् याथार्थ्येन। गृहीतवान् अवबुद्धवान्। मदाशयं मदभिप्रायं। अनपेक्षमाणः अनभिलषन्। चेष्टते व्याप्रियते।

राजा । आर्य्य ! अत एव मां प्रयोजनशुश्रूषा मुखरयति । (र)

चाण । वृषल ! श्रूयताम्,—इह खलु अर्थशास्त्रकाराः त्रिविधां सिद्धिम् उपवर्णयन्ति । तद्यथा,—राजायत्तां, सचिवायत्ताम्, उभयायत्ताञ्च इति । ततः सचिवायत्तसिद्धेर्भवतः (ल) किं फलान्वेषणेन ? यतो वयमेव अत्र नियुक्ता वेत्स्यामः ।

राजा । [ सकोप इव मुखं परिवर्त्तयति ] ।

[ ततो नेपथ्ये वैतालिकौ पठतः ] ।

एकः,—

आकाशं काशपुष्पच्छविमभिभवता भस्मना शुक्लयन्ती,
शीतांशोरंशुजालैर्जलधरमलिनां क्लिन्दती कृत्तिमैभीम् ।
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्वा,
हास्यश्रीराजहंसा हरतु तनुरिव क्लेशमैशी शरद् वः ॥ २०

अपिच,—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणाम्,
आत्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ २१

(र) अतएव भवदीयकार्य्याणां मदधीनत्वादेव । मुखरयति मुखरं करोति वाचालयतीत्यर्थः ।

( ल ) अर्थशास्त्रकाराः नीतिशास्त्रप्रणेतारः । सचिवस्य आयत्ता अधीना सिद्धिः साफल्यं यस्य तस्य सचिवायत्तसिद्धेः अमात्याधीनसाफल्यस्य । फलान्वेषणेन उद्देश्यानुसन्धानेन ।

आकाशमित्यादि । काशपुष्पछविं काशकुसुमकान्तिं अभिभवता अतिक्रामता अतिधवलेनेत्यर्थः । भस्मना समालम्भितभूत्या आकाशं नभोमण्डलं शुक्लयन्ती धवलयन्ती, पक्षे काशकुसुमाभिभाविना शारदकुसुमेन स्वभावनीलमपि आकाशं शुक्लयन्तीत्यर्थः । शीतांशोः शिरःस्थितस्य चन्द्रमसः अंशुजालैः किरणसमूहैः जलधरमलिनां मेघश्यामां ऐभीं कृत्तिं गजचर्म क्लिन्दती भिन्दती पक्षे शीतांशोरंशुजालैः विमलचन्द्रकिरणैः ऐभीं कृत्तिमिव जलधरमलिनां मेघश्रेणिमिति शेषः । क्लिन्दती अपसारयन्ती । कौमुदीं कुमुदसम्बन्धिनीमिव कापालीं नरकपालरचितां धवलां शुभ्रां स्रजं मालां उद्वहन्ती धारयन्ती । पक्षे कापालीं स्रजमिव कौमुदीं । अपूर्वा असमाना । हास्यश्रीः हास्यशोभा राजहंसा इव यस्याः सा हास्यश्रीराजहंसा, पक्षे हास्यश्रीः इव राजहंसाः यस्याः सा । इति ऐशी तनुरिव अपूर्वा अभिनवा शरत् शरदृतुः च युष्माकं क्लेशं कष्टं आध्यात्मिकादिदुःखं हरतु नाशयतु । अत्र उपमालङ्कारः । स्रग्धरावृत्तं । लक्षणं प्रागुक्तम् ॥ २०

प्रत्यग्रोन्मेषजिह्मेत्यादि । प्रत्यग्रोन्मेषः नवोन्मेषः तेन जिह्मा वक्रा यस्य तत्

द्वितीयः,—

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतोः,
जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम्।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपाः,
नाज्ञाभङ्गं सहन्ते नृवर। नृपतयस्त्वादृशाः सार्वभौमाः॥ २२

अपिच,—भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते॥ २३

शर्वरीम्। स्वप विश्राम। भाम चपल चहवधिक यस्य तत् भागाह प्रथमं चमत्क्रमण इत्यर्थ। मोज परिष्वजु इत्थी चभिलषत हरेर्नारायणस्य। प्रत्यग्रं तनूनपात् यथा तथा सम्मीलिय चपरीषेण उन्मीलनेन जिह्वा सङ्कुचिता। चण चल्पकालं व्याप्य, चनलगिरौ इत्थितरवानि एव दीपा तेषां या दशा तासां चनभिमुखी पराङ्मुखी तद्दर्शनाक्षमा। चङ्गभङ्गेन सह वर्तमाने साङ्गभङ्गे जृम्भिते जृम्भणे मुखव्यादानपूर्वकान्तरवायुनिष्कासनव्यापारैरित्यर्थ। जनित उत्पन्न जलानां चश्रुजलानां लवा बिन्दवो यस्यां सा जनितजललवा चर्यामलदश्रुबिन्दु। चालस्यापारे दमनक्रिय या गुर्व्वी मन्थरा चालस्य रहितेति यावत्। निद्राया संपत्तस्य छेदेन भङ्गेन चतितास्रा चतिलोहिता चाकेकरा ईषत् सङ्कुचिता 'दृष्टिर् केकरा किञ्चित् स्फुटापाङ्गे प्रसारिता। मीलितार्द्धपुटा लोके तारा व्यावर्त्तनोत्तरा" इत्युक्ते। हरि नयनं च युष्मान् चिर दीर्घकालं व्याप्य चवतु रक्षतु॥ अत्र स्वभावोक्तिरलङ्कार। स्वभावोक्ति डिम्भादेः स्वक्रियरूपवर्णनम्। इति दर्पणोक्ते। स्रग्धरावृत्तम्॥ ॥ २१

सत्त्वोत्कर्षस्य इत्यादि। नृषु मनुष्येषु वर श्रेष्ठ हे नृवर मलयाय। कस्यापि प्रयोजनस्य हेतोः निमित्तप्रयोजनाय इत्यर्थ। धात्रा विधात्रा सत्त्वोत्कर्षस्य शौर्य्यातिशयस्य निधय इव चाधारा इव कृता स्वेन स्वकीयेन धाम्ना प्रभावेण लोकोत्तरमहिम्ना इत्यर्थ मदसलिलमुचां दानवारिवर्षिणां नागयूथेश्वराणां गजघटापतीनां पक्षे गर्जितानां राज्ञाञ्च जेतार पराभावतार, व्यक्तो प्रकटो मानावलेपो सम्मानगर्व्वो येषां ते तथोक्ता सर्व्वं स्वीकृतगौरवगर्व्वा इत्यर्थ केऽपि त्वादृशा भवादृशा सार्व्वभौमा राजचक्रवर्त्तिन नृपतय नर राजा। मृगाणां पशूनां अधिपतय प्रभव सिंहा दंष्ट्राणां दन्तानां भङ्ग उत्पाटन इव आज्ञाया भङ्ग व्याघात अन्यथाचरणमिति यावत् तं आज्ञाभङ्गं आदेशलङ्घनं न सहन्ते क्षमन्ते। पञ्चाननानां दशनभञ्जनमिव नरपतीनामाज्ञालङ्घनं सर्व्वथैव दुःसहमिति भाव। एतद्विषये स्मृति —आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनं पृथक् शय्या कुलस्त्रीणामशस्त्रविहितो वध॥ इति॥ उपमालङ्कार उत्प्रेक्षा च। स्रग्धरावृत्त॥२२

भूषणाद्युपभोगेनेत्यादि। प्रभु भूषणादीनां हारकेयूरप्रभृतीनां प्रासादादीनाञ्च उपभोगेन प्रभवतीति प्रभु ईश्वर, राजा इत्यर्थ न भवति। परै अन्यै अपरिभूता अनवज्ञाता समादृता इति यावत् आज्ञा यस्य स अपरिभूताज्ञ अखण्डिताज्ञ अव्याहतशासन इत्यर्थ। त्वं भवानिव

चाण। [आकर्ण्य आत्मगतम्।] प्रथमं तावद्विशिष्टदेवतास्तुतिरूपेण प्रवृत्तशरद्गुणप्रख्यापनम् आशीर्वचनम्; इदम् अपरं किमिति न अवधारयामि। [विचिन्त्य।] आः ज्ञातम्। राक्षसस्य अयं प्रयोगः। आः दुरात्मन् राक्षसहतक! दृश्यसे, जागर्त्ति खलु कौटिल्यः (व)।

राजा। आर्य वैहीनरे! दीयताम् आभ्यां वैतालिकाभ्यां सुवर्णशतसहस्रम्।

कञ्चु। यद् आज्ञापयति देवः। [इति उत्थाय परिक्रामति।]

चाण। [सक्रोधम्।] वैहीनरे! तिष्ठ तिष्ठ, न गन्तव्यम्। वृषल! किमयमस्थाने एव महान् अर्थोत्सर्गः (श) क्रियते?

राजा। आर्येण एव सर्वतो निरुद्धचेष्टाप्रसरस्य (ष) मम बन्धनम् इव राज्यं, न राज्यमिव।

चाण। वृषल! स्वयम् अनभियुक्तानां राज्ञाम् एते दोषा भवन्ति। तद् यदि न सहसे, तदा स्वयमेव अभियुज्यस्व। (स)

राजा। एते वयं स्वकर्माणि अभियुज्यामहे।

चाण। प्रियं नः, वयमपि स्वकर्माणि अभियुज्यामहे।

राजा। यदि एवं, तर्हि कौमुदीमहोत्सवप्रतिषेधस्य प्रयोजनं श्रोतुम् इच्छामि।

राजा प्रभुः नियहानुग्रहसमर्थः कर्त्ता उच्यते कथ्यते जनैरिति शेषः। स्वेच्छावस्तूपभोगेन विलासवाहुल्येन च प्रभुत्वं न जायते समभ्यर्थितशासनत्वमेव नियतं राजत्वमिति भावः। एतत् श्लोकद्वयं राक्षसप्रेरितेन वैतालिकद्वयान्यतमेन स्तनकलसेन पठितम्। उपमालङ्कारः। पथ्यावक्त्रं वृत्तम्॥ २१

(व) विशिष्टा श्रेष्ठा हरिहररूपेत्यर्थः या देवता तस्याः स्तुतिरूपेण स्तवव्याजेन। प्रवृत्ताया प्रक्रान्तायाः उपस्थितायाः शरदः शरद्गतो गुणप्रख्यापनं उत्कर्षप्रकाशी यच्चित् तत् तयोक्तं। अवधारयामि निश्चिनोमि। प्रयोगः प्रवर्त्तनं। खलु निश्चितं कौटिल्यः जागर्त्ति अप्रमत्तः समुद्युक्तश्च वर्त्तते।

(श) अस्थाने अनुपयुक्तपात्रे। महान् विपुलः। अर्थानां धनानां उत्सर्गः वितरणं दानमित्यर्थः। "त्यागो विहापितं दानमुत्सर्जनविसर्जने" इत्यमरः।

(ष) एवमनेन प्रकारेण सर्वतः सर्वत्र निरुद्धः प्रतिरुद्धः संयतः इत्यर्थः चेष्टाया कार्यस्य प्रसरः व्याप्तिर्यस्य तस्य निरुद्धचेष्टाप्रसरस्य संयताभिलाषस्येत्यर्थः।

(स) अनभियुक्तानां अनुद्युक्तानां अस्वाधीनानां। अभियुज्यस्व उद्युङ्क्ष्व राजकार्यपर्य्यवेक्षणे अभिनिविष्टो भव इत्यर्थः।

चाण। वृषल! कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनम् इति अहमपि श्रोतुम् इच्छामि।

राजा। प्रथमं तावत् ममाज्ञाव्याघातः। (ङ)

चाण। वृषल! ममापि खलु त्वदाज्ञाव्याघात (क) एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनमिति। कुतः?—

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनानाम्,
आ पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम्॥
मालेवाम्लानपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः,
सा मय्येव स्खलन्ती प्रथयति विनयालङ्कृतं ते प्रभुत्वम्॥ २४

राजा। अथ अपरमपि प्रयोजनं यत् तच्छ्रोतुम् इच्छामि।

चाण। तदपि कथयामि।

राजा। कथ्यताम्।

चाण। शोणोत्तरे! शोणोत्तरे! मद्वचनात् कायस्थम् अचलदत्तं ब्रूहि, यत् भद्रभटप्रभृतीनामितोऽपरागादपक्रम्य मलयकेतुमाश्रितानां लेख्यपत्रं तावत् (ख) दीयताम् इति।

प्रती। जं अज्जो आणवेदि त्ति। [निष्क्रम्य पुनः प्रविश्य।] अज्ज! इदं पत्तं। (२)

---

(२) यदार्य आज्ञापयति इति। आर्य! इदं पत्रम्।

---

(ङ) आज्ञायाः अव्याघातः अव्याहतत्वम्।

(क) तव आज्ञाया आदेशस्य व्याघातः भङ्गः उल्लङ्घनमिति यावत्।

अम्भोधीनामित्यादि। तमालप्रभवाणि तापिञ्छोत्पन्नानि यानि किसलयानि नव पल्लवाः तैः श्यामानि नीलानि वेलावनानि तीरस्थकाननानि येषां तेषां सर्वोकानां चटुलैः चञ्चलैः तिमिकुलैः तिमिनामकमत्स्यविशेषसमूहैः क्षोभितम् आलोडितम् अन्तर्जलं जलमध्यं येषां तेषां सर्वोकानां। चतुर्णाम् अम्भोधीनाम् आपारेभ्यः आ तीरेभ्य इति शेषः। नतानाम् अवनतानां नृपतीनां भूपालानां शतैः शिरोभिः मस्तकैः करणैः, सपुष्पा सकुसुमा माला स्रक्, इव, तव या आज्ञा आदेशः उह्यते उह्यते स्वीक्रियते इत्यर्थः। सा आज्ञा मयि त्वत् प्रतिष्ठातरि मामेव नान्यस्मिन्नित्येवकारार्थः स्खलन्ती व्याहता सती विनयालङ्कृतं विनयविभूषितं ते प्रभुत्वं कर्तृत्वं राजभावमित्यर्थः प्रथयति विस्तारयति विख्यापयतीत्यर्थः। अत्र उपमालङ्कारः। स्रग्धराछन्दः॥ २४

(ख) अपरागात् चन्द्रगुप्ते असन्तोषात्। इतः अस्मात् स्थानात् अपक्रम्य अपगम्य।

चाण। [गृहीत्वा।] वृषल! श्रूयताम्।

राजा। दत्तावधानोऽस्मि। (ग)

चाण। [वाचयति।] स्वस्ति, सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणाम् इतोऽपक्रम्य मलयकेतुम् आश्रितानां परिमाणलेख्यपत्रम्। तत्र प्रथमं तावत् गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः, महाप्रतीहारस्य चन्द्रभानोर्भागिनेयो हिङ्गुरातः, देवस्य स्वजनगन्धी महाराजो बलगुप्तः, देवस्यैव कुमारसेवको राजसेनः, सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, मालवराजपुत्रो रोहिताक्षः, क्षत्रगणमुख्यतमो विजयवर्मा इति [स्वगतम्।] एते वयं देवस्य कार्य्ये अवहिताः स्म इति। (घ) [प्रकाशम्।] एतावद् एतत् पत्रम्।

राजा। आर्य्य! एतेषाम् अपरागहेतून् (ङ) श्रोतुम् इच्छामि।

चाण। वृषल! श्रूयताम्, अत्र यौ एतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभटपुरुषदत्तनामानौ, एतौ खलु स्त्रीमद्यमृगयाशीलौ, हस्त्यश्ववेक्षणे अनभियुक्तौ; इति स्वाधिकाराभ्याम् अवरोप्य मया स्वजीवनमात्रेणैव स्थापितौ इति अपरक्तौ (च) गत्वा स्वेन स्वेन च अधिकारेण व्यवस्थाप्य मलयकेतुम् आश्रितौ। यौ इतौ हिङ्गुरातबलगुप्तौ, तौ अपि अत्यन्तलुब्धप्रकृती, दत्तं धनम् अबहुमन्य

लेख्यपत्र लिखिता पत्रिका। तावत् साकल्येन "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे"। इत्यमरः। सर्वमित्यर्थः।

(ग) दत्तम् अवधानं मनःसंयोगो येन सः दत्तावधानः अवहितचित्तः।

(घ) सुगृहीतनामधेयस्य प्रातःस्मरणीयस्य। सह उत्तिष्ठन्ति ये तेषां समानसुखदुःखानामित्यर्थः। परिमाणाय संख्यायै लेख्यपत्र। महाप्रतीहारस्य प्रधानद्वाररक्षिणः। स्वजनगन्धी सम्पर्केण स्वजन इत्यर्थः। कुमारसेवक शैशवसहाय। कनीयान् कनिष्ठः। क्षत्रगणमुख्यतमः क्षत्रियश्रेष्ठप्रधानः। अवहिताः सावधानाः। स्माभिलिखितम् एतत् इत्यर्थः।

(ङ) अपरागहेतून् असन्तोषकारणानि।

(च) स्त्री वारयोषित्, मद्यं सुरा, मृगया आखेटः तासु स्त्रीमद्यमृगयासु शीलं ययोः तौ तथोक्तौ। अनभियुक्तौ असावधानौ। अवरोप्य विच्युत्य। केवलं स्वजीवनं स्वजीवनमात्रं तेन, ग्रासमात्र दत्त्वा, स्थापितौ एतयोरन्यानि धनादीनि गृहीतानि, जीवनमु रक्षितमित्यर्थः। अपरक्तौ असन्तुष्टौ।

मानौ, (छ) तत्र बहु लभ्येत इति मलयकेतुम् आश्रितौ । योऽपि असौ भवतः कुमारसेवको राजसेनः, सोऽपि तव प्रसादात् अतिमात्रं कोषहस्त्यश्वं सहसा एव समहदैश्वर्य्यम् अवाप्य पुनरुच्छेदशङ्कया अपक्रम्य मलयकेतुम् आश्रितः । योऽयमपरः सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, असौ अपि तत्र काले पर्वतकेन सह समुत्पन्नसौहार्दः तत्प्रीत्या च "पिता ते चाणक्येन घातितः" इति रहसि त्रासयित्वा, मलयकेतुम् अपवाहितवान् ; (ज) ततो भवदपथ्यकारिषु (झ) चन्दनदासप्रभृतिषु निगृह्यमाणेषु (ञ) स्वदोषाशङ्कया अपक्रम्य मलयकेतुमाश्रितः ; तेनापि (ट) असौ मम अनेन प्राणाः परिरक्षिता इति कृतज्ञताम् अनुरुध्यमानेन (ठ) पैतृकञ्च परिचयम्, आत्मनोऽनन्तरम् अमात्यपदं प्रापितः । यौ तौ रोहिताक्षविजयवर्माणौ, तौ अत्यन्तमानित्वात् (ड) स्वदायादेभ्यः त्वया दीयमानं बहुसम्मानम् असहमानौ मलयकेतुम् आश्रितौ । इत्येषाम् अपरागहेतवः ।

राजा । आर्य्य ! एवम् एतेषु परिज्ञातापरागहेतुषु अपि क्षिप्रमेव कस्मात् न प्रतिविहितम् आर्य्येण ? (ढ)

चाण । वृषल ! न पारितं प्रतिविधातुम् ।

राजा । किम् अकौशलात्, उत प्रयोजनापेक्षितया ? (ण)

चाण । कथम् अकौशलं भविष्यति, नियतं प्रयोजनापेक्षितया ।

(छ) अयथं अतिप्रयेन भुक्ता प्रतिश्रयौ तौ । बहु प्रचुर धनम् ।

(ज) अपवाहितवान् अपक्रामितवान् ।

(झ) अपथ्यकारिषु अनिष्टकारिषु ।

(ञ) निगृह्यमाणेषु निगृहीतेषु दण्डितेषु ।

(ट) तेन मलयकेतुना । अनुरुध्यमानेन अपेक्षमाणेन ।

(ठ) आत्मनः अनन्तरं अव्यवहितं प्रत्यासन्नमित्यर्थः । अमात्यपदं साचिव्यम् ।

(ड) अत्यन्तमानित्वात् बहुसम्मानवत्वात् । स्वदायादेभ्यः निजज्ञातिभ्यः ।

(ढ) एतेषु भद्रभटादिविरक्तपुरुषेषु । परिज्ञाताः सम्यक् विदिताः अपरागहेतवः कारणानि येषां तेषु । क्षिप्रं सत्वरं । प्रतिविहितं प्रतिविधानं कृतम् ।

(ण) अकुशलस्य भावः अकौशलं तस्मात् अकौशल्यात् अनैपुण्यात् । उत अथवा प्रयोजनापेक्षितया कार्य्यान्तरापेक्षया ।

राजा। तत् प्रतिविधानप्रयोजनम् इदानीं श्रोतुमिच्छामि।

चाण। वृषल! श्रूयताम् अवधार्य्यताञ्च।

राजा। उभयमपि क्रियते, कथ्यताम्।

चाण। वृषल! इह खलु विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानम्; तद् यथा, अनुग्रहो निग्रहश्च इति। अनुग्रहस्तावत् आक्षिप्ताधिकारयोः भद्रभटपुरुषदत्तयोः पुनः अधिकारारोपणम् एव। अधिकारश्च पुनः तादृशेषु व्यसनदोषात् अनभियुक्तेषु पुनः आरोप्यमाणः सकलस्य एव राज्यस्य मूलं हस्त्यश्वम् अवसादयेत्। (त) हिङ्गुरातबलगुप्तयोः अत्यन्तलुब्धप्रकृतिकयोः सकलराज्यसम्प्रदानेनापि अपरितुष्यतोः अनुग्रहः कथं कर्त्तुं शक्यः? राजसेनभागुरायणयोस्तु, स्वधनप्राणनाशभीतयोः कुतोऽनुग्रहस्य अवकाशः? रोहिताक्षविजयवर्म्मणोरपि दायादमानप्रदानपीडितयोः मानमपि अपमानं मन्यमानयोः अत्यन्तमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति परिहृतः पूर्वः पक्षः; उत्तरोऽपि खलु वयम् अचिरात् अधिगतनन्दैश्वर्याः सहोत्थायिनं प्रधानपुरुषवर्गम् उग्रेण दण्डेन पीडयन्तो, नन्दकुलानुरक्तानां प्रकृतीनाम् अविश्वास्या भवामः, इत्यतः परिहृत एव (थ)। तत् एवम् अनुगृहीतास्मद्भृत्यपक्षो राक्षसोपदेशप्रवणो महीयसा म्लेच्छराजबलेन परिवृतः, पितृवधामर्षितः पर्वतकपुत्रो मलयकेतुः अस्मान् अभियोक्तुम् उद्यत इति, सोऽयं व्यायामकालो न उत्सवकालः (द)

(त) द्विविधं द्विप्रकारं। निग्रहः दण्डः। आक्षिप्ताधिकारयोः विलोपिताधिकारयोः। व्यसनदोषात्—स्त्रीमद्यादिषु अत्यासक्तिदोषात्। अवसादयेत् नाशयेत्।

(थ) दायादस्य ज्ञातेश्च मानप्रदानेन पीडितयोः दुःखितयोः। मानं गौरवं। अपमानं अगौरवं। पूर्व्वः पक्षः "अनुग्रहनिग्रहयोः" अनुग्रहरूपः प्रथमः पक्षः। उत्तरः निग्रहरूपः शेषः पक्षः। अचिरात् अधुना। उग्रेण कठोरेण। अविश्वास्याः अविश्वासभूमयः। परिहृतः परित्यक्तः।

(द) अनुगृहीतः अनुकम्पितः अस्मद्भृत्यानां पक्षो येन स तथोक्तः। राक्षसस्य उपदेशश्रवणे आदेशपालने प्रवणः समुत्सुकः। महीयसा प्रबलेन। परिवृतः परिवेष्टितः। पितृवधामर्षितः पितृवधेन सञ्जातकोपः। व्यायामस्य श्रमसाध्यकार्य्यस्य युद्धोद्योगस्य इत्यर्थः कालः समयः।

इति। अतो दुर्गसंस्कारे आरब्धव्ये, किं कौमुदीमहोत्सवेन? इति प्रतिषिद्धः। (ध)

राजा। आर्य्य! बहु प्रष्टव्यमत्र।

चाण। वृषल! विश्रब्धं पृच्छ, ममापि बह्वाख्येयम् अत्र। (न)

राजा। एष पृच्छामि।

चाण। अहमपि एष कथयामि।

राजा। योऽयम् अस्माकमस्य सर्वस्यैव अनर्थस्य हेतुर्मलयकेतुः, स कस्मात् आर्य्येण अपक्रामन् उपेक्षितः? (प)

चाण। वृषल! मलयकेतौ अपक्रमणानुपेक्षणे द्वयी गतिः स्यात्; अनुग्रहेण निग्रहेण वा। अनुग्रहे पूर्वप्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत। निग्रहे तावत् पर्वतकोऽस्माभिः व्यापादित इति कृतघ्नतायाः स्वयं हस्तो दत्तः स्यात्। प्रतिश्रुतार्द्धराज्यप्रतिपादनेऽपि पर्वतकविनाशः केवलं कृतघ्नतामात्रफलः (ब) स्यात् इति मलयकेतुः अपक्रामन् उपेक्षितः।

राजा। अत्र तावदेवम्। राक्षसः पुनः इहैव कुसुमनगरे (फ) वर्त्तमानः आर्य्येण उपेक्षितः, इत्यत्र किमुत्तरम् आर्य्यस्य?

चाण। राक्षसोऽपि खलु निजस्वामिनि स्थिरानुरागित्वात् सुचिरमेव अत्र सहवासाच्च शीलज्ञानां नन्दानुरक्तानां प्रकृतीनाम् अत्यन्तं विश्वास्यः, प्रज्ञापुरुषकाराभ्याम् उपेतः, सहायसम्पदा

(ध) दुर्गस्य परिखया कैवाशस्य वा संस्कारे समीधने सम्प्रतिविधाने। आरब्धव्ये आरम्भणीये। बहुप्रष्टव्यं बहवः प्रश्ना इत्यर्थः।

(न) विश्रब्धं सविश्वासं। बहुतरं आख्येयं वक्तव्यम्।

अपक्रामन् पलायमानः। उपेक्षितः परित्यक्तः। (प)

(ब) अपक्रमणस्य अनुपेक्षणे उपेक्षाराहित्ये। द्वयी द्विविधा गतिः उपायः। पूर्वप्रतिश्रुतं प्राक् अङ्गीकृतम्। प्रतिपाद्येत समर्प्येत। कृतघ्नतायाः अकृतज्ञतायाः। स्वयं आत्मना। दत्तः हस्तावलम्बनः। पर्वतकनिधनजनितलोकापवादो दुरपनेयो भवेत्। प्रतिश्रुतस्य अङ्गीकृतस्य अर्द्धराज्यस्य प्रतिपादने समर्पणेन केवलं कृतघ्नता कृतघ्नत्वमात्रं फलं लाभो यस्य स तथोक्तः।

(फ) कुसुमनगरे नगरमध्ये। वर्त्तमानः अवतिष्ठमानः। उत्तरं प्रतिवचनम्।

युक्तः, कोपबलवान् इहैव अन्तर्नगरे वर्त्तमानो महान्तं खलु अन्तःकोपम् उत्पादयेत्। दूरीकृतस्तु, बाह्यकोपम् उत्पादयन्नपि (ब) न दुःखसाध्यो भविष्यति इत्यतोऽपक्रामन् उपेक्षितः।

राजा। तत् किमर्थम् इहस्थ एव उपायैः न उपक्रान्तः? (भ)

चाण। अथ कथम् उपक्रान्तो भविष्यति? ननु उपायैः एव असौ हृदयेशयः शङ्कुरिव उद्धृत्य दूरीकृतः। (म) दूरीकरणस्य च उक्तं प्रयोजनम्।

राजा। आर्य! कस्माद्विक्रम्य न गृहीतः?

चाण। वृषल! राक्षसः खलु असौ विक्रम्य निगृह्यमाणः स्वयं वा विनश्येत्, युष्मद्बलानि वा विनाशयेत्। एवं सति उभयथापि दोषः। पश्य,—

स हि भृशमभियुक्तो यद्युपेयाद् विनाशं,
ननु वृषल! वियुक्तस्तादृशेनासि पुंसा।
अथ तव बलमुख्यान् नाशयेत्, सापि पीड़ा,
वनगज इव तस्मात् सोऽभ्युपायैर्विनेयः॥ २५

राजा। न शक्नुमो वयम् आर्य्यस्य वाचा वाचम् अतिशयितुं, सर्वथा अमात्यराक्षस एव अत्र प्रशस्यतरः। (य)

(ब) निगद्यामिति सप्तमी मन्दे। स्थिरानुरागित्वात् दृढभक्तिकत्वात्। सर्वावस्थान् उपकृतावस्थानात्। शीलज्ञानां विदितस्वभावानां। अत्यन्त विश्वास्य अतिप्रत्ययपात्रम्। प्रज्ञापुरुषकाराभ्यां बुद्धिपौरुषाभ्यां उपेत युक्तः। कोपबलवान् धनसैन्यान्वितः। अन्तःकोप प्रकृतीनां क्षोभ। बाह्यकोप विद्विविशेषं। दूरीकृत, विताड़ित दूरे वर्त्तमान।

(भ) इहस्थ अत्र वर्त्तमानः। उपायैः सामादिभि। उपक्रान्त, गृहीत।

(म) असौ राक्षस। हृदयेशय मर्म्मविद्ध शङ्कु शल्यम्।

स हि भृशमित्यादि। यदि यद्यपि स राक्षस भृशं अत्यर्थं अभियुक्त आक्रान्त सन् विनाशं निधन उपेयात् प्राप्नुयात्। ननु भो वृषल तादृशेन शौर्य्यवता इत्यर्थः। पुंसा पुरुषेण वियुक्त विरहितः असि भवसि। अथ पक्षान्तरे तव भवत. बलेषु सैन्येषु मुख्या प्रधाना तान् बलमुख्यान् सैन्याध्यक्षान् नाशयेत् मारयेत् सापि सैन्यक्षतिरपि पीडा दुःखकारणं तस्मात् कारणात् वनगजः वनहस्ती इव सः राक्षस अभ्युपायै सामादिप्रयोगै विनेय वशीकर्त्तव्यः न तु बलात् इत्यर्थः। उपमालङ्कारः। मालिनी वृत्तम्॥२५

(य) वाचा वाक्येन आर्य्यस्य वाच अतिशयितुं अतिक्रमितुं। सर्वथा सर्वतोभावेन। प्रशस्यतरः अतिशयेन प्रशस्यः प्रशंसनीय।

चाण। [सक्रोधम्।] न भवान् इति वाक्यशेषः मा तावत् एवम्। भो वृषल! तेन किं कृतम्?

राजा। यदि न ज्ञायते, तदा श्रूयताम्। तेन खलु महात्मना,—

लब्धायां पुरि यावदिच्छमुषितं, कृत्वा पदं नो गले,
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः।
अत्यर्थं विपुलैः सुनीतिविभवैः सम्मोहमापादिता,
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः॥ २६

चाण। [विहस्य।] वृषल! एतत् कृतं राक्षसेन!!

राजा। अथ किम्। एतत् कृतम् अमात्यराक्षसेन।

चाण। वृषल! मया पुनर्ज्ञातं, नन्दमिव भवन्तम् उद्धृत्य भवानिव भूतले मलयकेतुः अधिराज्यम् आरोपितः।

राजा। अलम् उपालभ्य? आर्य! दैवेन (२) इदम् अनुष्ठितं, किम् अत्र आर्यस्य?

चाण। हे मत्सरिन्?

आरुह्यारूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडां,
लोकप्रत्यक्षमुग्रां, सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम्।
केनान्येनावलिप्ता नव नवतिशतद्रव्यकोटीश्वरास्ते,
नन्दाः पर्यायभूताः पशव इव हताः पश्यतो राक्षसस्य॥ २७

लब्धायामित्यादि। पुरि नगरे कुसुमपुरे लब्धायां अस्माभिरधिकृतायां न, अस्माकं गले कण्ठे पदं चरणं कृत्वा निधाय यावदिच्छं इच्छामनतिक्रम्य ईप्सितसमयपर्यन्तं उषितं पुरि स्थितं। अस्मद्बलानां मदीयसैन्यानां जयघोषणादिषु विजयप्रचारादिषु बलात् बलं सैन्यमाश्रित्य व्याघातः विघ्नः प्रतिकूलता इत्यर्थः। कृतः विहितः। सर्वत्र तेनेति गम्यमानपदेनान्वयः। विपुलैः प्रचुरैः सुनीतिविभवैः उत्कृष्टनीतिकौशलैः अत्यर्थं सम्मोहमौग्ध्यं मूढतां आपादिताः प्रापिताः नः अस्माकं मतयः बुद्धयः स्वेषु स्वकीयेषु वर्गेषु गणेषु नितान्तमात्मीयेषु विश्वास्येषु प्रत्ययपात्रेषु अपि किमुतान्येषु इत्यपिकारार्थः। न विश्वसन्ति अत्र उदात्तालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ २६

(२) उपालभ्य तिरस्कृत्य। दैवेन अदृष्टेन।

आरुह्य इत्यादि। आरूढस्य प्रवृद्धस्य कोपस्य क्रोधस्य स्फुरणेन विकारेण विषमितानि अयथास्थितानि यानि तानि आरूढकोपस्फुरणविषमितानि या अङ्गुल्यः ताभिर्मुक्ता बन्धनविरहिता चूडा शिखा यस्यां तां तथोक्तां। सकलस्य अशेषस्य रिपुकुलस्य शत्रुवर्गस्य उच्छेदेन विनाशेन दीर्घां दुस्तरां तां सकलरिपुकुलोच्छेददीर्घां उग्रां भीषणां प्रतिज्ञां प्रतिश्रुतिं लोकप्रत्यक्ष

अपिच,—

गृध्रैराबद्धचक्रं वियति विचलितैर्दीर्घनिष्कम्पपक्षै,
धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः।
नन्दानां नन्दयन्तः पितृवननिलयान् प्राणिनः पश्य चैतान्,
निर्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः॥ २८

राजा। अन्येनैव इदम् अनुष्ठितम्।

चाण। आः केन?

राजा। नन्दकुलविद्वेषिणा दैवेन। (ख)

चाण। दैवम् अविद्वांसः प्रमाणयन्ति। (ग)

राजा। विद्वांसोऽपि अविकत्थना भवन्ति। (घ)

चाण। [क्रोधं नाटयन्] वृषल! वृषल! भृत्यमिव माम् आरोढुम् इच्छसि? (ङ)

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः,

[भूमौ पादप्रहारं दत्वा]

स च [illegible] अवहरा प्रावन्धा अथेन यत् [illegible] जनेन [illegible] नाचयुद्य पद्मन [illegible] भवति शतशृङ्खकोटीश्वरा प्रचुरसमैश्वर्यशालिन, [illegible] अधिगता अर्जिता, मम मन्दा पर्याप्तभूता, एकद मत्तयता [illegible] [illegible] स्थापिता। अत्र उपमालङ्कारः। सम्धरावृत्तम्॥ २७

गृध्रैराबद्धचक्रमित्यादि। वियति आकाशे आबद्ध [illegible] चक्र मण्डलं यत्किम तत् आबद्धचक्र [illegible] यथा तथा विचलितैः भ्रमद्भिः [illegible] दीर्घा विस्तीर्णा निष्कम्पा अचञ्चलाश्च पक्षा येषां तैः दीर्घनिष्कम्पपक्षैः [illegible] गृध्रैः एव धूमैः ध्वस्ता विनष्टः अर्कस्य सूर्यस्य भासः किरणा यासु ता तासां ध्वस्तार्कभासां [illegible] दिशां आशानां मण्डलं दिक्चक्रवालमित्यर्थः सघन समेघमिव दर्शयन्तः एतान् पितृवननिलयान् श्मशानाश्रितान् प्राणिनः जीवान् नन्दयन्तः आनन्दितान् कुर्वन्तः नन्दानां [illegible] स्रुतबहुलवसावाहिनः [illegible] हव्यवाहाः चितावह्नयः अद्यापि न निर्वान्ति निर्वाणं यान्ति। [illegible] नीत्यर्थः। अत्र [illegible] उत्प्रेक्षया सङ्कीर्यते। सम्धरावृत्तम्॥ २८

(ख) नन्दस्य कुलं विद्वेष्टि इति नन्दकुलविद्वेषी तेन नन्दवंशद्वेषिणा।

(ग) अविद्वांसः मूर्खाः। प्रमाणयन्ति स्वीकुर्वन्ति।

(घ) अविकत्थनाः अनात्मश्लाघाः।

(ङ) आरोढुं भर्त्सयितुं।

चाणक्यतः स्खलितभक्तिमहं सुखेन,
जेष्यामि मौर्य्यमिति सम्प्रति यः प्रयुक्तः
भेदः, किलैष भवता सकलः स एव,
सम्पत्स्यते, शठ ! तवैव हि दूषणाय ॥ २१

[इति निष्क्रान्तः।]

राजा। आर्य्य ! वैहीनरे ! अद्य प्रभृति अनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यकार्य्याणि करिष्यतीति गृहीतार्थाः (क) प्रकृतयः क्रियन्ताम्।

कञ्चुकी। [स्वगतम्] कथं निरुपपद (ख) एव चाणक्यो न आर्य्य चाणक्य इति। हन्त ! सत्यमेव हृतोऽधिकारः;—अथवा न खलु अत्र वस्तुनि देवं दोषेण अवगन्तुम् अर्हामि।—

स दोषः सचिवस्यैव, यदसत् कुरुते नृपः।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ २२

राजा। आर्य्य ! किं विचारयसि ?

कञ्चुकी। देव ! न किञ्चिद् विचारयामि, किन्तु एतद् विज्ञापयामि, दिष्ट्या देव इदानीं देवः संवृत्तः (ग) इति।

राजा। [आत्मगतम्] एवम् अस्मासु गृह्यमाणेषु स्वकार्य्यसिद्धि-

चाणक्यत इत्यादि। हे शठ प्रतारक। अहं चाणक्यतः कौटिल्यात् स्खलितभक्तिं विगतानुरागं मौर्य्यं चन्द्रगुप्तं सुखेन अक्लेशेन जेष्यामि अभिभविष्यामि इति विविच्य सम्प्रति इदानीं यो भेदः भेदनीतिः प्रयुक्तः व्यवहृतः। सकलः सम्पूर्णः स एव भेदः तवैव भवत एव दूषणाय अनिष्टाय सम्पत्स्यते परिणतो भविष्यति। ... वसन्ततिलकं वृत्तम् ॥ २१

(क) अवगतस्य वृत्तान्तस्य। गृहीतार्थाः विदितविषयाः।

(ख) निरुपपदम् आर्य्य इति पूर्व्वपदं तेन सह निरुपपदं आर्य्यपदशून्यम्।

स दोष इत्यादि। यत् नरपतिः असत् अन्याय्यं दुष्कर्म्मादि कुरुते विधत्ते। स असदाचरणरूपः दोषः सचिवस्य अमात्यस्य एव। यन्तुः निषादिनः हस्तिपकस्य प्रमादेन अनवधानतया गजः व्यालत्वेन दुष्टत्वेन वाच्यतां निन्दां याति, तत्र व्यालत्ववाच्यतां दुष्टतापवादं याति प्राप्नोति पथ्यावक्त्रम् ॥ २२

(ग) दिष्ट्या दैवेन। इदानीं अधुना देव, देवः सत्यः सदमात्यत्वात् यथार्थेन राजेत्यर्थः।

कामं, सकामो भवतु आर्य्यः। [प्रकाशम्] शोणोत्तरे! अनेन शुष्ककलहेन शिरोवेदना (घ) मां बाधते, तत् शयनगृहम् आदेशय।

प्रती। एदु एदु महाराओ।

राजा। [आसनात् उत्थाय आत्मगतम्।]

आर्य्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमिव भूविवरं प्रवृत्ता।
ये सत्यमेव न गुरून् प्रतिमानयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा? ॥ ३३

[इति निष्क्रान्ताः सर्वे।]

इति तृतीयोऽङ्कः ॥ ३

---

(१) एतु एतु महाराज।

---

(घ) अथाहं एवं "अधिकारच्युत चाणक्यो दूरीकृत राजा स्वाधीनोजात" एवं कथं रज्जामातातु प्रकृतिभिरिति भाव। सकार्थसिद्धिकाम निजकार्यसाफल्याभिलाषी। सकाम पूर्णकाम। शुष्ककलहेन वृथाविवादेन। शिरोवेदना शिरःपीड़ा।

आर्य्याज्ञयैवेत्यादि। आर्य्यस्य चाणक्यस्य आज्ञयैव एव लङ्घितं गुरूकृतं गौरवं सम्मानो येन स तस्य लङ्घितगौरवस्य गुरूकृतसम्मानस्य मम बुद्धिः भूविवरं पृथ्वीतलं प्रवेष्टुं प्रवृत्ता उद्यता इव। लज्जया इति शेषः। ये जना: सत्यं निश्चितं स्वेच्छया इत्यर्थ। गुरून् माननीयान् पूज्यतमान न प्रतिमानयन्ति आद्रियन्ते, लज्जा त्रपा तेषां हृदयं अन्तरं कथं न भिनत्ति विदारयति विदारयत्येवोचितमिति भाव॥ अप्रीतप्रत्याहार:। वसन्ततिलक वृत्तम् ॥ ३३

इति मुद्राराक्षस व्याख्यायां शिष्यबोधिन्यां तृतीयोऽङ्कः समाप्त ॥

पुरु। भद्रमुह! जधा दे रोचदि। (५)

[ ततः प्रविशति शयनगत आसनगतेन शकटदासेन अनुगम्यमानश्चिन्तितो राक्षसः ]।

राक्ष। [ आत्मगतम् ]।

मम विमृशतः कार्य्यारम्भे विधेरविधेयतां,
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम्।
अथ च विहिते मत्कृत्यानां निकाममुपग्रहे,
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः॥ २

अपि च,—

कार्य्योपक्षेपमादौ, तनुमपि रचयंस्तस्य विस्तारमिच्छन्,
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च।
कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि, पुनः संहरन् कार्य्यजातं,
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा॥ २

तदपि नाम दुरात्मा चाणक्यवटुः,—

दौवारिक। [ उपसृत्य। ] जेदु जेदु—" (६)

---

(५) भद्रमुख! यथा ते रोचते।
(६) जयति जयति।

---

मम विमृशत इत्यादि। कार्य्यस्य राक्षसोद्धारणरूपकर्म्मण आरम्भे विधेः दैवस्य अविधेयतां अवशीभूततां स्वाधीनतां प्रतिकूलाचरणमित्यर्थः विमृशतः अनुस्मरतः। तथा सहजकुटिलां कुटिलप्रकृतिकां अतिदुर्बोधामित्यर्थः कौटिल्यस्य चाणक्यस्य मतिं बुद्धिं प्रचिन्तयतः विभावयतः। अथच मत्कृत्यानां मदीयकार्य्याणां मत्प्रयुक्तविविधोपायानां उपग्रहे उपरोधे वैफल्ये निकामं पर्य्याप्तं यथा तथा विहिते सम्पादिते सति चाणक्येनेति शेषः। इदं वैफल्यं कथं केन प्रकारेण कृतमिति शेषः। अथवा इदं राक्षसोद्धरणं कथं केन प्रकारेण भवेदिति शेषः। इति चिन्तया इह अत्र अनिशं सततं उन्निद्रस्य वीतनिद्रस्य मम निशाः रात्रयः प्रयान्ति यान्ति॥ अत्र काव्यलिङ्गमलङ्कारः। हरिणीवृत्तं। नसमरसलागः षड्वेदैर्हयैः हरिणी मता। इति लक्षणात्॥ २

कार्य्योपक्षेपमित्यादि। आदौ प्रथमे मुखसन्धौ च तनु स्वल्प अपि कार्य्योपक्षेपं सामाद्युपाय बीजन्यासञ्च रचयन् कुर्वन्, तस्य उपायस्य बीजस्य च विस्तारं व्याप्तिं बाहुल्यमित्यर्थः इच्छन् अभिलषन्, गर्भितानां फलदानोन्मुखानां बीजानां साधनानाञ्च अतिगहनं अत्यन्तदुर्बोधं फलं गूढं प्रच्छन्नं यथा तथा उद्भेदयन् ईषत्प्रकाशयन्, बुद्ध्या बुद्धिबलेन विमर्शं

राच। "—अभिसन्धातुं शक्यः स्यात्—(घ)

दौवा। "—अमच्चो। (७)

[ वामाक्षिस्पन्दं सूचयित्वा आत्मगतम्। ] "दुरात्मा चाणक्यवटुर्जयति, अभिसन्धातुं शक्यः स्याद् अमात्यः" इति वामाक्षिस्पन्दनेन प्रस्तावगतं प्रतिपादयति। तथापि न उद्यमस्त्याज्यः। (ङ) [ प्रकाशम्। ] भद्र! किमसि वक्तुकामः?

दौवा। अमच्च! एसो क्खु करहओ पाडलिपुत्तादो आअदो, इच्छदि अमच्चं पेक्खिदुं। (८)

राच। अवारितं प्रवेशयैनम्। (च)

दौवा। जं अमच्चो आणवेदि। [ इति निष्क्रम्य पुरुषम् उपसृत्य। ] भद्द! एसो क्खु अमच्चो चिट्ठदि, ता उपसप्प णं। (९)

[ इति निष्क्रान्तो दौवारिकः। ]

कर [ राक्षसमुपसृत्य। ] जेदु जेदु अमच्चो। (१०)

राच। [ नाट्येन अवलोक्य। ] भद्र करभक! स्वागतम्? उपविश्यताम्।

कर। जं अमच्चो आणवेदि। (११) [ इति भूमौ उपविशति ]।

राच। [ स्वगतम्। ] अथ कस्मिन् प्रयोजने मयाऽयं प्रणिधि

(७) अमात्य.।

(८) अमात्य! एष खलु करभकः पाटलिपुत्रादागतः, इच्छति अमात्यं प्रेक्षितुम्।

(९) यदमात्य आज्ञापयति। भद्र। एष खलु अमात्यस्तिष्ठति, तदुपसर्पैनम्।

(१०) जयति जयति अमात्यः।

(११) यदमात्य आज्ञापयति।

प्रहित इति प्रभूतत्वात् (ज) प्रयोजनानां न खलु अवधारयामि (छ)
[इति चिन्तां नाटयति]।

[ततः प्रविशति वेत्रपाणिः अपरः पुरुषः।]

पुरु। ओसलध अज्जा! ओसलध। अवेध, भावहे अवेध। किं ण पेक्खध?—

दूले पच्चासत्ती दंसणमवि दुल्लहं अधण्णेहिं।
कल्लाणकुलहलाणं देवाण व मणुस्सदेवाणं ॥४॥ (१२)

(आकाशे।) अज्जा! किं भणाध, किं णिमित्तं एसा ओसालणा करीअदि? (ज) अज्जा! एसो क्खु कुमालो मलयकेदू, समुप्पण्ण सीसवेअणं अमच्चरक्खसं सुणिअ, पेक्खिदुं इदो ज्जेव आअच्छदि। एदिणा कालणेण ओसालणा करीअदि। (१३)

[इति निष्क्रान्तः पुरुषः।]

[ततः प्रविशति भागुरायणेन कञ्चुकिना च
अनुगम्यमानो मलयकेतुः]।

मल। [निःश्वस्य आत्मगतम्।] अद्य दशमो मासस्तातस्य उपरतस्य। न च अस्माभिर्वृथा पुरुषकारम् उद्वहद्भिः तमुद्दिश्य तोयाञ्जलिरपि आवर्जितः। (झ) अथवा, प्रतिज्ञातम् एतत् पुरस्तात्।—

---

(१२) अपसरत आर्याः! अपसरत। अपेत भावाः! अपेत। किं न पश्यत?—

दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यैः।
कल्याणकुलधराणां देवानामिव मनुष्यदेवानाम् ॥

(१३) आर्याः! किं भणथ, किं निमित्तमेषा अपसारणा क्रियते? आर्याः! एष खलु कुमारो मलयकेतुः, समुत्पन्नशीर्षवेदनम् अमात्यराक्षसं श्रुत्वा, प्रेक्षितुम् इत एव आगच्छति। एतेन कारणेन अपसारणा क्रियते।

---

(छ) कस्मिन् प्रयोजने अर्थे, कमर्थं सम्पादयितुमित्यर्थः। प्रणिधिः गूढचरः। प्रहितः प्रेरितः। प्रभूतत्वात् बाहुल्यात्। अवधारयामि निश्चिनोमि।

दूरे इत्यादि। कल्याणकुलानि मङ्गलसमूहाः तान् धरन्तीति तेषां सकलमङ्गलास्पदानां देवानां इव मनुष्यदेवानां नरदेवानां राज्ञां दर्शनं अवलोकनं अधन्यैः अकृतपुण्यैः दुर्लभं दूरे प्रत्यासत्तिः सान्निध्यं दूरे वर्तते इति शेषः उपमालङ्कारः ॥ ४

(ज) आर्याः मान्याः। भणथ वदथ। अपसारणा गच्छतां जनानां सम्मर्दनिवारणाय उत्सारणा।

(झ) उपरतस्य मृतस्य। पुरुषकारं पौरुषं वृथा विफलं यथा तथा। उद्वहद्भिः धारयद्भिः न पितरं तोयाञ्जलिः जलाञ्जलिः। आवर्जितः दत्तः।

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्त्तनादकरुणं भूरेणुरूक्षालकम् ।
तादृङ्मातृजनस्य शोकजनितं सम्प्रत्यवस्थान्तरं,
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः ॥ ५

तत् किम् इह बहुना ?—

उद्यच्छता धुरमकापुरुषानुरूपां
गन्तव्यमाजिविहितेन पितुः पथा वा ।
आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि बाष्पः ॥ ६

[ प्रकाशम् । ] आर्य्य जाजले ! उच्यन्ताम् अस्मद्वचनात् अनुयायिनो राजानः, एक एव अहम् अमात्यराक्षसस्य अतर्कितागमनेन प्रीतिम् उत्पादयितुम् इच्छामि, अतः कृतम् अनुगमनक्लेशेन इति । (ञ).

कञ्चु । — यत् आज्ञापयति कुमारः । [ परिक्रम्य आकाशे । ] भो भो राजानः ! कुमारः समाज्ञापयति, ( ट ) न खलु अहं केनचित्

वक्षस्ताडन—इत्यादि । मातृजनस्य जननीलोकस्य शोकेन इष्टवियोगजन्यदुःखेन जनितं उत्पन्नं वक्षस्ताडनेन उरःस्थलाघातेन भिन्नानि भग्नानि रत्नवलयानि मणिमयकटकानि [redacted] तत् तथोक्तं । भ्रष्टं स्थानच्युतं उत्तरीयांशुकं 'उत्तरीयवस्त्रं यत्र तत् तथोक्तं' । हाहा इति उच्चरितेन आर्त्तनादेन कातरध्वनिना करुणं दीनं । भूरेणुभिः धरणीधूलिभिः रूक्षाः धूसराः अलकाः चूर्णकुन्तलाः यस्मिन् तत् तथोक्तं । तादृक् अनिर्वचनीयं अवस्थान्तरं दशान्तरम् इव मया सम्प्रति अधुना शत्रुस्त्रीषु विधाय गुरवे पित्रे निवापाञ्जलिः तर्पणजलाञ्जलिः देयः प्रदातव्यः ॥ शार्दूलविक्रीडितं वृत्तम् ॥ ५

उद्यच्छता इत्यादि । कुत्सितः पुरुषः कापुरुषः तस्य अनुरूपा न भवतीति अकापुरुषानुरूपा वीरजनोचिता [redacted] तथोक्तां धुरं भारं उद्यच्छता उद्वहता मया आजिनिहितेन युद्धहतेन पितुः पथा मृत्युरूपमार्गेण गन्तव्यं यातव्यं । वा अथवा स्वस्य निजस्य जननीजनस्य मातृलोकस्य लोचनेभ्यः नयनेभ्यः आच्छिद्य आक्षिप्य बाष्पजलमिव शेषः । बाष्पः नेत्रजलं रिपुवधूनां शत्रुयोषितां नयनानि नेत्राणि मया प्रापणीयः । अत्र अनयोः तथा नेय इति क्रियायाः एककारकत्वात् दीपकालङ्कारः । वसन्ततिलकं वृत्तम् [redacted]

( ञ ) अनुयायिनः अनुगामिनः । अतर्कितं आगमनं येन अतर्कितागमनेन, आकस्मिकोपगमेन । अनुगमनक्लेशेन मदनुसरणजनितकष्टेन कृतं अलम् ॥

( ट ) समाज्ञापयति समादिशति ।

अनुगन्तव्य इति । [विलोक्य सहर्षम् ।] कुमार ! कुमार ! एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्व एव राजानः । पश्यतु कुमार :—

सोत्सेधैः स्कन्धदेशैः खरतरकविकाकर्षणात्यर्थभुग्नैः
अश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात् ।
केचिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ताः,
मर्यादां भूमिपाला जलधय इव ते देव ! नोल्लङ्घयन्ति ॥ ७

मलय॰ । आर्य जाजले ! त्वमपि सपरिजनो (ट) निवर्त्तस्व । भागुरायण एक एव माम् अनुगच्छतु ।

कञ्चु॰ । यत् आज्ञापयति कुमारः ।

[इति सपरिजनो निष्क्रान्तः ।]

मलय॰ । सखे भागुरायण ! विज्ञापितोऽहम् इह आगच्छद्भिर्भद्रभटप्रभृतिभिः, यथा न वयम् अमात्यराक्षसद्वारेण (ड) कुमारम् आश्रयामहे, किन्तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य, दुष्टामात्यपरिगृहीतात् चन्द्रगुप्तात् अपरक्ताः सन्तः कुमारम् आभिगामिकगुणयोगादाश्रयणीयम् आश्रयामह इति, तन्मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽधिगतः । (ढ)

सोत्सेधैरित्यादि । केचित् नरपतिभिः खरतराणां तीक्ष्णतराणां कविकानां खलीनानां "कविका तु खलीनोऽस्त्री" इत्यमरः । आकर्षणेन प्रकृष्टकर्षणेन अत्यर्थं यथा तथा भुग्ने कुटिले सोत्सेधे समुन्नते स्कन्धदेशे उपलक्षिताः, तथा खुरपुटैः खुराग्रैः पुरस्तात् अग्रे खम् आकाशं खण्डयन्त विदारयन्त इव स्थिताः अश्वा निरुद्धा निवारिताः । केचित् नरपतयः विहतजवतया व्याहतवेगतया वेगस्याघातेनेत्यर्थः मूकघण्टैः निःशब्दघण्टारवैः मातङ्गमुख्यैः कुञ्जरश्रेष्ठैः निवृत्ता अनुसरणात् विरताः । हे देव अमी भूमिपाला नरपतयः जलधयः सरित्पतयः मर्यादां वेलाभूमिमिव ते मर्यादां आदेशं न उल्लङ्घयन्ति न अतिक्रामन्ति । आज्ञामिवाज्ञां शिरसि वहन्तीत्यर्थः । अत्रोत्प्रेक्षालङ्कारः उपमया सङ्कीर्णः ॥ स्रग्धरावृत्तम् ॥ ७

(ट) परिजनेन भृत्यादिना सह सपरिजनः ।

(ड) अमात्यराक्षस एव द्वारं तेन अमात्यराक्षसद्वारेण तमाश्रित्येत्यर्थः ।

(ढ) दुष्टः अमात्यः तेन परिगृहीतः तस्मात् दुष्टामात्यपरिगृहीतात् दुःसचिववशीभूतात् । अपरक्ताः विरक्ताः । आभिगामिकानां गुणानां दयादाक्षिण्यादीनां योगः तस्मात्

भागु। कुमार। नैव अयम् अत्यन्तादुर्बोधोऽर्थः। पश्य, विजिगीषुम् आत्मगुणसम्पन्नः प्रियहितकारिणं आश्रयणीयम् आश्रयेदिति ननु न्याय्य एव अयम्। (ण)

मल। सखे भागुरायण! ननु अस्माकम् अमात्यराक्षसः प्रियतमो हिततमश्च।

भागु। कुमार। एवमेतत्, किन्तु अमात्यराक्षसः चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते, तद् यदि कदाचित् चन्द्रगुप्तः चाणक्यम् अतिजितकाशिनम् असहमानः साचिव्यात् अवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वय एव अयमिति ज्ञात्वा, सम्पत्सुहृज्जनापेक्षया च, अमात्यराक्षसः चन्द्रगुप्तेन सह सन्दधीत। चन्द्रगुप्तोऽपि पितृपारम्पर्यागत एव अयमिति ज्ञात्वा, सन्धिम् अनुमन्येत। (त) एवं सति अस्मासु अपि कुमारो न विश्वसेत् इति अयम् एषां वाक्यार्थः।

मल। युज्यते। (थ) सखे भागुरायण! अमात्यराक्षसस्य गृहमार्गम् आदेशय।

भागु। इत इतः कुमारः। [इति उभौ परिक्रामतः।] कुमार। इदम् अमात्यराक्षसस्य गृहं, प्रविशतु कुमारः।

मल। एष प्रविशामि। [इति उभौ प्रवेशनं नाटयतः।]

राक्ष। [आत्मगतम्] आः स्मृतम्। [प्रकाशम्।] भद्र! अपि दृष्टस्त्वया कुसुमपुरे वैतालिकः स्तनकलशः?

---

हती। आश्रयणीयं आश्रयणीयम्। सुचिरं दीर्घकालं। विचारयता पर्यालोचयता। अधिगतं सम्यग्विदितं।

( ण ) आत्मगुणैः शौर्यवीर्यादिभिः सम्पन्नः संयुक्तः। प्रियहितकारिणं प्रीतिकरं हितकरञ्च जनं आश्रयेदित्यर्थः। न्याय्यं न्यायसङ्गतम्।

( त ) बद्धवैरः कृतशत्रुभावः। अतिजितकाशिनम् अतिगर्वितं। असहमानः अक्षममाणः। साचिव्यात् मन्त्रित्वात्। अवरोपयेत् विच्यावयेत्। नन्दान्वय नन्दवंशोत्पन्नम्। सम्पद् ऐश्वर्यादि, सुहृज्जनाः चन्दनदासादयः बन्धुजनाः तेषां अपेक्षया अनुरोधेन। सन्दधीत सन्धिं कुर्वीत। पितृपारम्पर्यागतः पितृक्रमागतः सेवकः इत्यर्थः। सन्धिम् अनुमन्येत अनुमोदितं कुर्यात्।

( थ ) युज्यते सङ्गच्छते।




कर। अमच्च। अध इं। (१४)

मल। सखे! भागुरायण! कुसुमपुरवृत्तान्तो ऽत्रैवावामुपसर्पाव (द) शृणुवस्तावत्,—

मन्त्रभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः।
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः॥८

भागु। यत् आज्ञापयति कुमारः।

राच। भद्र! अपि तत् कार्य्यं सिद्धम्?

कर। अमच्चस्स पसाएण सिद्धम्। (१५)

मल। सखे भागुरायण! किं तत् कार्य्यम्?

भागु। कुमार! गहनः खलु सचिववृत्तान्तो न एतावता परिच्छेत्तुं शक्यते। अवहितस्तावत् श्रोतुमर्हति कुमारः। (ध)

राच। भद्र! विस्तरेण श्रोतुम् इच्छामि।

कर। सुणादु अमच्चो, अत्थि दाव (प) अहं अमच्चेणाणत्तो, जधा,— "करभअ! कुसुमपुरं गच्छिअ, भणिदव्वो, मम वअणेण तुए वेआलिओ थणकलसो, जधा, चाणक्कहदएण तेसु तेसु अण्णाभङ्गेसु अणुचिट्ठीअमाणेसु, चन्दउत्तो समुत्तेअणसमत्थेहिं सिलोएहिं उवसिलोअइदव्वो" त्ति। (१६) (न)

---

(१४) अमात्य! अथ किम्।

(१५) अमात्यस्य प्रसादेन सिद्धम्।

(१६) शृणोतु अमात्य, अस्ति तावत् अहममात्येन आज्ञप्तो यथा—"करभक

---

(द) उपसर्पाव। समीपं गच्छाव।

मन्त्रभङ्गभयादित्यादि। मन्त्रिणः सचिवाः मन्त्रभङ्गभयात् मन्त्रितार्थस्य प्रकाशशङ्कया राज्ञां नरपतीनां पुरः अग्रे अन्यथा प्रकारान्तरेण कथयन्ति। विवृत व्यक्तीकृत प्रकटीकृत इत्यर्थः अर्थः येषु तेषु विवृतार्थेषु स्वैरालापेषु स्वेच्छासम्भाषणेषु अन्यथा प्रकारान्तरेण यथार्थं वा इत्यर्थः कथयन्ति॥८

(ध) गहनः दुर्ज्ञेयः। एतावता एतत्परिमितेन वाक्येन परिच्छेत्तुं अवधारयितुं। अवहितः अभिनिविष्टः।

(प) अस्ति तावत् श्रोतव्यमित्यर्थः।

(न) आज्ञाभङ्गेषु आदेशलङ्घनेषु। अनुष्ठीयमानेषु क्रियमाणेषु समुत्तेजनसमर्थैः सन्धुक्षणोपजनकैः। उपश्लोकयितव्यः श्लोकैरुपश्लोकितव्यः।

राक्ष। ततस्ततः।

कर। तदो मए पाडलिउत्तं गच्छिअ, सुणाविदो अमच्चस्स सन्देसं वेआलिओ थणकलसो। (१७)

राक्ष। ततस्ततः।

कर। एत्थन्तरे णन्दकुलविणासदुम्मणस्स पोरजणस्स परिओस समुप्पाअन्तेण चन्दउत्तेण, आघोसिदो कुसुमउरे कौमुदीमहो मवो। सोवि चिरआलवत्तमाणो अणिव्वदपरिओसो अहिमदबन्धुजणसमागमो विअ, ससिणेहं बहुमाणिदो णअरजणेण। (१८) (घ)

राक्ष। [सवाष्पम्] हा देव! नन्द!—

कौमुदी कुमुदानन्दे जगदानन्दहेतुना।
कीदृशी सति चन्द्रेऽपि नृपचन्द्र! त्वया विना ॥ ८

भद्र! ततस्ततः?

---

कुसुमपुरं गत्वा मम वचनेन त्वया भणितव्यो वैतालिकः स्तनकलशः, यथा चाणक्यहतकेन तेषु तेषु चाज्ञाभङ्गेषु अनुष्ठीयमानेषु चन्द्रगुप्त उत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः" इति

(१७) ततो मया पाटलिपुत्रं गत्वा, श्रावितः अमात्यस्य सन्देशं वैतालिकः स्तनकलशः।

(१८) अत्रान्तरे नन्दकुलविनाशदुर्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेन आघोषितः कुसुमपुरे कौमुदीमहोत्सवः। सोऽपि चिरकालवर्त्तमानो अनिर्वृतपरितोषः, अभिमतबन्धुजनसमागम इव, सस्नेहं बहुमानितः नगरजनेन।

---

(घ) नन्दकुलस्य नन्दवंशस्य विनाशेन विध्वंसेन दुर्मनाः मनो यस्य तस्य। पौरजनस्य पुरवासिनः। परितोषं सन्तोषम्। समुत्पादयता विदधता। आघोषितः प्रख्यापितः। महोत्सवः। चिरकालं बहुकालं व्याप्य प्रवर्त्तमानः क्रियमाणः, चिरागतः इत्यर्थः। अनिर्वृतः [illegible] परितोषः [illegible] अनुत्पादितानन्द। अभिमत अभीष्ट [illegible] इत्यर्थः। यो बन्धुजन तस्य समागम [illegible]। [illegible] सदृश। [illegible] मानितः पूजितः॥

कौमुदीत्यादि। हे नृपचन्द्र राजचन्द्र जगदानन्दहेतुना भुवनसन्तोषकारकेण सकलप्रीतिदायिना इत्यर्थः। त्वया विना त्वां विना कुमुदानन्दे कुमुदविकाशजनके [illegible] चन्द्रे चन्द्रमसि निशाकरे च सत्यपि विद्यमानेऽपि कौमुदी चन्द्रिका, कौमुदीमहोत्सवश्च [illegible] अत्र श्लेषानुप्राणितो व्यतिरेकालङ्कारः ॥ ८

कर। अमच्च! तदो सो लोअलोअणाणन्दभूदो अणिच्छन्तस्स ज्जेव णाअरजणस्स (फ) णिवारिदो चाणक्कहदकेण कोमुदीमहूसवो। एत्थन्तरे त्थणकलसेण पउत्ता चन्दउत्तस्स समुत्तेअण-समत्था सिलोअपरिवाडी। (१८)

राक्ष। कीदृशी सा?

कर। ["सत्त्वोत्कर्षस्य" इत्यादि पूर्वोक्तं पठति]।

राक्ष। [सहर्षम्] साधु सखे स्तनकलश! साधु। काले भेद-बीजमुप्तम्, (ब) अवश्यमेव फलम् उपदर्शयिष्यति। यतः,—

सद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत्।
किमु लोकाधिकं धाम बिभ्राणः पृथिवीपतिः॥ १०

मल। एवमेतत्?

राक्ष। ततस्ततः?

कर। तदो, चन्दउत्तेण आणाभङ्गकलुसिदहिअएण, सुइरं अमच्चगुणं पसंसिअ, अब्भंसिदो अहिआरादो चाणक्कहदओ (२०) (भ)

मल। सखे भागुरायण! गुणप्रशंसया दर्शितः चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः। (म)

---

(१८) अमात्य! ततः स लोकलोचनानन्दभूतोऽनिच्छत एव नागरजनस्य निवारितश्चाणक्यहतकेन कौमुदीमहोत्सवः। अत्रान्तरे स्तनकलशेन प्रवर्त्तिता चन्द्रगुप्तस्य समुत्तेजनसमर्था श्लोकपरिपाटी।

(२०) ततश्चन्द्रगुप्तेन आज्ञाभङ्गकलुषितहृदयेन, सुचिरम् अमात्यगुणं प्रशस्य, भ्रंशितोऽधिकाराच्चाणक्यहतकः।

---

(फ) लोकलोचनानाम् आनन्दभूतः प्रीतिहेतुः। अनिच्छतः नगरजनस्य अनिच्छन्तं नगरजनं अनादृत्य।

(ब) काले उपयुक्तसमये। उप्तं रोपितम्।

सद्य इत्यादि। प्राकृतोऽपि नीचोऽपि जनः क्रीडायाम् आनन्दजनके विषये रसच्छेदं रस-भङ्गं सद्यः तत्क्षणात् न मर्षयेत् सहेत। लोकाधिकं सर्वलोकातिशं धाम तेजः बिभ्राणः धारयन् पृथिवीपतिर्भूपालः किमु मर्षयेदिति शेषः न कथमपि मर्षयेदित्यर्थः॥ १०

(भ) आज्ञाया आदेशस्य भङ्गेन लङ्घनेन कलुषितं हृदयं यस्य तेन। भ्रंशितः प्रच्यावितः। अधिकारात् साचिव्यात्।

(म) गुणप्रशंसया उत्कर्षस्तुत्या। भक्तिपूर्वः पक्षपातः भक्तिपक्षपातः।

भागु। कुमार! न तथा गुणप्रशंसया, यथा चाणक्यबटोः निराकरणेन। (य)

राक्ष। भद्र! किम् अयमेव एकः कौमुदीमहोत्सवप्रतिषेधः चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणम्, उत अन्यदपि अस्ति?

मल। सखे भागुरायण! चन्द्रगुप्तस्य अपरकोपकारणान्वेषणे किं फलमेष पश्यति? (र)

भागु। कुमार! एतत् फलं पश्यति,—मतिमान् चाणक्यः निष्प्रयोजनमेव (ल) किं प्रति चन्द्रगुप्तं कोपयिष्यति। न च कृतवेदी (व) चन्द्रगुप्त एतावता गौरवम् उल्लङ्घयिष्यति। सर्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात् कारणाद् यो विश्लेष उत्पद्येत स आत्यन्तिको भविष्यति इति। (श)

कर। अमच्च! अत्थि अण्णं वि चन्दउत्तस्स कोवकारणं चाणक्के (२१)

राक्ष। किं किम्?

कर। जधा पढमं दाव उवेक्खिदो अणेण अवक्कमन्तो (ष) कुमारो मलयकेदू अमच्चरक्खसो अ। (२२)

राक्ष। [सहर्षम्] सखे शकटदास! हन्त! हस्ततलगतः (स) मे सम्प्रति चन्द्रगुप्तो भविष्यति।

---

(२१) अमात्य! अस्ति अन्यदपि कोपकारणं चाणक्ये।

(२२) यथा प्रथमं तावदुपेक्षित अनेन अपक्रामन् कुमारो मलयकेतुः अमात्यराक्षसश्च।

शक। इदानीं चन्दनदासस्य बन्धनान्मोचः, भवतां च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः। (ह)

भागु। [आत्मगतम्] जातं सत्यं जीवसिद्धेः क्लेशच्छेदः।

मल। सखे भागुरायण! "हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यति" इति व्याहरतः, कोऽयमस्य अभिप्रायः? (क)

भागु। किम् अन्यत्? चाणक्याद् अपकृष्टस्य चन्द्रगुप्तस्य उद्धरणाद् (ख) किञ्चित्कार्य्यम् अवश्यं पश्यति।

राक्ष। भद्र! हृताधिकारः साम्प्रतं क्व (ग) असौ वटुः?

कर। तहिं ज्जेव पाडलिपुत्ते प्पडिवसदि। (२३)

राक्ष। [सावेगम्] भद्र! तत्रैव प्रतिवसति, न तपोवनं गतः प्रतिज्ञां वा न पुनः समारूढवान्? (घ)

कर। अमच्च! तपोवणं गमिस्सदि त्ति सुणीअदि। (२४)

राक्ष। [सावेगम्] (ङ) शकटदास! न इदमुपपद्यते पश्य,—

देवस्य येन पृथिवीतलवासवस्य
साऽग्रासनापनयजा निकृतिर्न सोढा।
सोऽयं स्वयङ्कृतनराधिपतिर्मनस्वी,
मौर्य्यात्कथं नु परिभूतिमिमां सहेत? ॥ ११

---

(२३) तत्रैव पाटलिपुत्रे प्रतिवसति।

(२४) अमात्य! तपोवनं गमिष्यतीति श्रूयते।

---

(ह) बन्धनात् कारागृहात्, मोचः मुक्तिः। समागमः सम्मेलनम्। क्लेशच्छेदः दुःखनाशः।

(क) व्याहरतः भाषमाणस्य। अभिप्रायः आशयः।

(ख) अपकृष्टस्य विप्रकृष्टस्य वियुक्तस्येत्यर्थः। उद्धरणात् उन्मूलनात्।

(ग) हृताधिकारः विलुप्ताधिकारः। क्व कुत्र वर्तते इति शेषः।

(घ) तपश्चरणार्थं तपोवनं न गतः न यातः अतिनिर्वेदात्। प्रतिज्ञां समारूढवान् अङ्गीकृतवान्, अभिलषितवान्।

(ङ) चाणक्ये तपोवनं गते असम्भावितदर्शनतया पुनः समागमाशा चिरलुप्ता स्यात्, चन्द्रगुप्तनिधनप्रतिज्ञा च मध्येऽवस्थिता इह तदवस्थे तु चाणक्ये वीतकोपतया पुनः सम्मेलनं सम्भवति, तेन च मे कार्यहानिरिति राक्षसस्याशयः। उपपद्यते सङ्गच्छते।

देवस्येत्यादि। येन चाणक्येन पृथिवीतलवासवस्य धरणीतलस्वामिनः, राजचक्रवर्त्तिन

मल। सखे भागुरायण! चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा का अस्य स्वार्थसिद्धिः?

भागु। कुमार! न अयम् अत्यन्तदुर्बोधोऽर्थः यावत् यावत् निरपेक्ष चाणक्यहतकः चन्द्रगुप्ताद् दूरीभवति (च) तावत् तावत् अस्य स्वार्थसिद्धिः।

शक। अमात्य! अलम् अत्यन्तविकल्पितेन। एतत् उपपद्यत एव (छ) कुतः? पश्यतु अमात्यः,—

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य्य आज्ञाविघातम्?।
कौटिल्यः कोपनोऽपि स्वयमभिचरणे ज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्ञानिभीतः ॥ १२

राच। सखे शकटदास! एवमेतत्, तद्गच्छ, विश्रामय करभकम्। (ज)

[illegible] ॥ ११

(च) अत्यन्तदुर्बोधः अतिशयदुर्विज्ञेयः। निरपेक्षः उदासीनः। दूरीभवति दूरं गत्वा तिष्ठति।

(छ) अत्यन्तविकल्पितेन [illegible]। उपपद्यते युज्यते।

राज्ञामित्यादि। [illegible] ॥ १२

(ज) [illegible]

पुरु। यत् आज्ञापयति अमात्य इति। [करभकेण सह निष्क्रान्त]।

राक्ष। अहमपि कुमारं द्रष्टुम् इच्छामि।

मल। अहमेव आर्य्यं द्रष्टुम् आगत।

राक्ष। [नाट्येन अवलोक्य] अये। कुमार एव आगत। [आसनात् उत्थाय]। इदम् आसनम्, उपवेष्टुम् अर्हति कुमार।

मल। अहम् उपविशामि। उपविशतु आर्य्य। [इति उभौ यथासनम् उपविष्टौ] आर्य्य। अपि सह्या शिरोवेदना? (झ)

राक्ष। कुमारस्य अधिराजशब्देन अतिरस्कृते कुमारशब्दे, कुत शिरोवेदनाया सह्यता? (ञ)

मल। स्वयम् उरीकृतमेतत् आर्य्येण, न दुष्प्रापं भविष्यति। तत् कियन्त कालम् अस्माभि एवं सम्भृतबलै अपि शत्रुव्यसनम् अपेक्षमाणै उदासितव्यम्। (ट)

राक्ष। कुमार! कुतोऽद्यापि कालहरणस्य अवकाश? प्रतिष्ठस्व रिपुजयाय।

मल। अमात्य। अपि किञ्चित् शत्रोर्व्यसनम् उपलब्धम्? (ठ)

राक्ष। बाढम्, उपलब्धम्।

मल। कीदृशम्?

राक्ष। सचिवव्यसनं, किम् अन्यत्। अपकृष्ट (ड) चाणक्यात् चन्द्रगुप्त।

मल। अमात्य। सचिवव्यसनम् अव्यसनमेव।

राक्ष। कुमार! अन्येषां भूपतीनां कदाचित् अमात्यव्यसनम् अव्यसनमपि स्यात्, न पुन चन्द्रगुप्तस्य।

मल। आर्य्य! ननु विशेषत चन्द्रगुप्तस्य इति।

(झ) सह्या सोढुं शक्या। शिरोवेदना शिर पीडा।

(ञ) अधिराज इति शब्द तेन। अतिरस्कृते अपरिभूते।

(ट) उरीकृतं अङ्गीकृतं। दुष्प्राप दुर्लभं। सम्भृतबलै सञ्चितसैन्यै शत्रोर्व्यसनं विपदं अपेक्षमाणै प्रतीक्षमाणै। उदासितव्यं निश्चिन्तै स्थातव्यं, सत्वरमनुकरत्वात्।

(ठ) उपलब्धं विदितं अवगतम्।

(ड) सचिवव्यसनं अमात्यविच्छेदरूपा विपत्। अपकृष्ट दूरवर्ती।

राक्ष। किं कारणं यत् अस्य अमात्यव्यसनम् अव्यसनम्?

मल। चन्द्रगुप्तप्रकृतीनां हि चाणक्यदोषा एव अपरागहेतवः। तस्मिन् निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृतयः। इदानीं पुनः सुतरामेव तत्र अनुरागं दर्शयिष्यन्ति। (ढ)

राक्ष। कुमार! न एतदेवं, इह द्विप्रकाराः प्रकृतयः,—चन्द्रगुप्तसहोत्थायिन्यो नन्दकुलानुरक्ताश्च (ण)। तत्र चन्द्रगुप्तसहोत्थायिनीनां प्रकृतीनां चाणक्यदोषा एव विरागहेतवः, न नन्दकुलानुरक्तानाम्। तास्तु खलु नन्दकुलम् अनेन पितृकुलभूतं कृतघ्नेन घातितमिति अपरागामर्षाभ्यां विप्रकृताः सत्यः स्वाश्रयम् अलभमानाः चन्द्रगुप्तम् एव अनुवर्त्तन्ते। त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावितशक्तिम् अभियोक्तारम् आसाद्य, क्षिप्रमेनं परित्यज्य, त्वामेव आश्रयिष्यन्ते इति। अत्र कुमारस्य वयमेव निदर्शनम्।(त)

मल। अमात्य! किमेतत् एवैकं सचिवव्यसनम् अभियोगकारणं चन्द्रगुप्तस्य? आहोस्वित् अन्यदपि अस्ति? (थ)

राक्ष। कुमार! किम् अन्यैः बहुभिरपि? एतद्धि तत्र प्रधानतमम्। (द)

(ढ) चन्द्रगुप्तप्रकृतीनां मौर्य्यप्रजापुञ्जानां चाणक्यस्य दोषाः विजयजनितगर्व्वादयः अवगुणा एव अपरागस्य विरक्तेः हेतवः कारणानि। तस्मिन् चाणक्ये निराकृते प्रत्याख्याते प्रथमं प्राक्। सुतराम् अत्यर्थम्। अनुरागं प्रीतिं भक्तिं वा।

(ण) चन्द्रगुप्तेन सह उत्तिष्ठन्ते इति चन्द्रगुप्तसहोत्थायिन्यः चन्द्रगुप्तसमदुःखसुखाः। नन्दकुलानुरक्ताः नन्दवंशानुरागिण्यः।

(त) ताः प्रकृतयः। पितृकुलभूतं पितृवंशसदृशं, प्रजापालनादिति भावः। कृतघ्नस्य। घातितं निपातितम्। अपरागामर्षाभ्यां विरागक्रोधाभ्याम्। विप्रकृताः विरक्ताः। स्वाश्रयं स्वकीयावलम्बनम् अलभमानाः अप्राप्नुवत्यः अनुवर्त्तन्ते आनुगत्येन तोषयन्ति। त्वादृशं भवद्विधम्। प्रतिपक्षोद्धरणे शत्रूच्छेदने सम्भावितशक्तिं अनुमितबलम्। अभियोक्तारं विजिगीषुम्। निदर्शनं दृष्टान्तः।

(थ) एतत् सचिवव्यसनं एवं एकविधं अभियोगकारणं आक्रमणहेतुः। आहो विकल्पार्थकमव्ययं। स्वित् प्रश्नबोधकमव्ययं। अन्यत् अन्यविधं कारणम्।

(द) तत्र तद्विषये प्रधानतमं सर्व्वोत्कृष्टतमम्।

मल। अमात्य! कथं प्रधानतमं नाम? किमिदानीं चन्द्रगुप्तः स्वराज्यकार्यधुराम् अन्यत्र मन्त्रिणि आत्मनि वा समासज्य, स्वयं प्रतिविधातुम् असमर्थः स्यात्। (च)

राक्ष। बाढम्, असमर्थ एव।

मल। किं कारणम्?

राक्ष। स्वायत्तसिद्धिषु, उभयायत्तसिद्धिषु (छ) वा भूमिपालेषु कदाचित् एतत् सम्भवेत्, न तु चन्द्रगुप्ते। चन्द्रगुप्तस्तु दुरात्मा, नित्यं सचिवायत्तसिद्धौ एव अवस्थितः चक्षुर्विकल इव अप्रत्यक्ष-सर्वलोकव्यवहारः (ज) कथमिव स्वयं प्रतिविधातुं समर्थः स्यात्? कुतः?—

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति॥ १३

अपि च,—

नृपोऽपकृष्टः सचिवात् तदर्पणः
स्तनन्धयोऽत्यन्तशिशुः स्तनादिव।
अदृष्टलोकव्यवहारमूढधी-
र्मुहूर्तमप्युत्सहते न वर्तितुम्॥ १४

(च) स्वराज्यस्य कार्यधुरां कार्यसम्पादनभारं। समासज्य संन्यस्य। स्वयं आत्मना। प्रतिविधातुं प्रतिकर्तुं। असमर्थः अक्षमः।

(छ) स्वायत्ता स्वाधीना सिद्धयो येषां तेषु तथोक्तेषु। उभयोः आत्मनः सचिवस्य च आयत्ता सिद्धयो येषां तेषु तथोक्तेषु।

(ज) दुरात्मा दुष्टः। नित्यं सततं। सचिवायत्तसिद्धौ अमात्याधीनसाफल्ये अव स्थितः वर्त्तमानः। चक्षुर्भ्यां विकलः हीनः चक्षुर्विकलः नेत्रविहीनः। अप्रत्यक्षः अदृष्टः सर्वेषां लोकानां व्यवहारो येन सः तथोक्तः।

अत्युच्छ्रिते इत्यादि। मन्त्रिणि सचिवे पार्थिवे भूपाले च अत्युच्छ्रिते अत्युन्नते समधिकं गर्विते सति श्रीः राजलक्ष्मीः पादौ चरणौ विष्टभ्य स्थिरीकृत्य उपतिष्ठते स्थिरा भवति। सा च लक्ष्मीः स्त्रीस्वभावात् स्त्रीस्वभावसुलभदौर्बल्यात् भरस्य असहा भारं वोढुमक्षमा इत्यर्थः। अतो द्वयोः तयोः राजमन्त्रिणोः एकतरं अन्यतरं जहाति त्यजति [illegible] ॥१३

नृपोऽपकृष्ट इत्यादि। स्तनन्धयः स्तन्यपायी अत्यन्तशिशुः नितान्तबालः स्तनात् कुच-पयोधरात् इव। तत् सचिवः अर्पयति कार्यभारं इति तदर्पणः तत्र न्यस्तकार्यभारः, न

मल। [आत्मगतम्] दिष्ट्या न सचिवायत्ततन्त्रोऽस्मि (फ) [प्रकाशम्] अमात्य ! यद्यपि एवं तथापि खलु बहुषु अभियोगकारणेषु सत्सु सचिवव्यसनम् अभियुञ्जानस्य शत्रुम् अभियोक्तुः न ऐकान्तिकी सिद्धिर्भवति। (ब)

राक्ष। ऐकान्तिकीमेव सिद्धिम् अवगन्तुम् अर्हति कुमार। कुतः ? —

त्वय्युत्कृष्टबलेऽभियोक्तरि नृपे, नन्दानुरक्ते पुरे,
चाणक्ये चलिताधिकारविमुखे, मौर्य्ये नवे राजनि।
स्वाधीने मयि —" [इत्यर्धोक्ते लज्जां नाटयन्]
"—मार्गमात्रकथनव्यापारयोगोद्यमे,
त्वद्वाञ्छान्तरितानि सम्प्रति विभो ! तिष्ठन्ति साध्यानि न. ॥ १५

मल। अमात्य ! यदि एवम् अभियोगकालम् अमात्यः पश्यति, तत् किम् आस्यते ? पश्य, —

इव भवनीक्षित लोकव्यवहारी दैवं स्व "अहष्टलोकव्यवहार" अतएव मूढधी मन्दमति तत' द्वयोर्विशेषणयो समास। नृपः भूपाल "सचिवात अमात्याते अपक्राट" विमुखट सन् मुहूर्त्तमपि अल्पकालमपि वर्त्तितुं स्थातुं न समर्थो भवति शक्नोति ॥ १४

(फ) दिष्ट्या भाग्येन। सचिवस्य आयत्त अधीनं तन्त्रं राजकार्य्यं यस्य स तथोक्त।

(ब) सचिवव्यसनं अमात्यस्य अभि व्यसनीकृत्य युद्धानस्य अनुतिष्ठत। अभियोक्तुः आक्रमयितुः। ऐकान्तिकी अवश्यम्भाविनी।

त्वय्युत्कृष्टबले इत्यादि। उत्कृष्टानि अत्यन्तादिगुणयुक्तानि बलानि सैन्यानि यस्य तस्मिन् उत्कृष्टबले उत्तमसैन्ये त्वयि नृपे राजनि अभियोक्तरि अभियोगकर्त्तरि, पुरे नगरे नन्दानुरक्ते नन्दानुरागिणि, चलित विमुख अधिकारः सचिवकार्य्ये यस्य स चलिताधिकार परित्यक्ताधिकार अतएव विमुख: पराङ्मुख. तस्मिन् तथोक्ते चाणक्ये कौटिल्ये, मौर्य्ये वृषले राजनि नवे नूतने अप्रतिष्ठितमर्यादे। मार्गमात्रस्य संग्रामपथमात्रस्य कथनं एव व्यापार तत्र योग उद्यमो चिन्ताशयो यस्य तस्मिन् मार्गमात्रकथनव्यापारयोगोद्यमे, मयि अमात्ये इत्थं स्वाधीने स्ववशे सति हे विभो प्रभो सम्प्रति न अस्माकं साध्यानि कार्य्याणि अभीष्टकार्य्याणीत्यर्थ. तव वाञ्छया आकाङ्क्षया एव अन्तरितानि व्यवहितानि अथवा त्वदन्तरितानि त्वदभिलाषमात्रापेक्षाणि तिष्ठन्ति वर्त्तन्ते ॥ अत्र समुच्चयालङ्कार.। समुच्चयोऽयं निजन्मन् मुन्य कार्य्यस्य साधके। खले कपोतिकान्यायात्तत्कर स्यात् परोऽपि चेत् ॥ इति लक्षणात् ॥ शार्दूलविक्रीडितं छन्द: ॥ १५

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरम्।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः ॥ १६

अपि च,—

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्रम्
आसारवर्षमिव शीकरमुद्गिरन्त्यः।
विन्ध्यं विकीर्णसलिला इव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीया. ॥ १७

[इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः]।

राक्ष। कः कोऽत्र भोः?

पुरुष। [प्रविश्य] आणवेदु अमच्चो। (२५)

---

(२५) आज्ञापयतु अमात्यः।

---

उत्तुङ्गा इत्यादि। उत्तुङ्गा अत्यर्थमुन्नता, स्रुतानि क्षरितानि मदसलिलानि दानवारीणि यैस्ता स्रुतमदसलिलाः, श्यामाः कृष्णवर्णाः, अलिभिः मधुलोभिभिर्भ्रमरैः मुखराः शब्दायमानाः, उरुभिः बृहद्भिः महद्भिरित्यर्थः, दशनैर्दन्तैः उत्सादितानि विनाशितानि तटानि तीराणि यैस्ते उत्सादिततटाः सिन्दूरेण लोहितवर्णविन्दुविशेषेणेत्यर्थः शोणाः रक्ताः शतशः असंख्याः गजपतयः गजेन्द्राः। तुङ्गकूलं समुन्नततटं, प्रस्यन्दीनि क्षरन्ति सलिलानि यत्र स प्रस्यन्दिसलिलः प्रवहमानतोयः। श्यामाः उपकण्ठद्रुमाः यस्य तं श्यामोपकण्ठद्रुमं नील-द्रुमाश्रिताभ्यर्णभूभागं। कल्लोलमुखरं तरङ्गवाचालं। स्रोतसा जलप्रवाहेण खातं विवृतं अतएव अवसीदत् अवसादं प्राप्नुवत् पतदित्यर्थः। तटं यस्य तं स्रोतःखातावसीदत्तटं निरन्तरप्रवाहविध्वस्ततीरं। शोणं पाटलिपुत्रान्तर्गतनदविशेषं पास्यन्ति। अत्र उपमालङ्कारः। सुवदना वृत्तम्। "ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना" इति लक्षणात्॥ १६

गम्भीरगर्जितरवा इत्यादि। गम्भीरं प्रगाढं यत् गर्जितं मेघगर्जनमित्यर्थः। तद्वत् रवः शब्दो यासां ताः गम्भीरगर्जितरवाः। स्वमदाः स्वकीयदानानि अम्बूनि जलानि तैर्मिश्रं स्वमदाम्बुमिश्रं दानजलयुक्तं शीकरं जलकणं "शीकरोऽम्बुकणाः स्मृताः।" इत्यमरः। आसारवर्षं धारासम्पातमिव "धारासम्पात आसारः" इत्यमरः। उद्गिरन्त्यः प्रकटयन्त्यः इव मदीया वारणघटा हस्तिसंघाः, विकीर्णसलिला विक्षिप्तजला मेघमाला घनपङ्क्तयः विन्ध्यं विन्ध्याचलम् इव नगरं कुसुमपुरं रोत्स्यन्ति अवरुद्धं करिष्यन्ति। उपमालङ्कारः। वसन्ततिलकं वृत्तम्॥ १७

राक्ष। प्रियंवदक! ज्ञायतां सांवत्सरिकाणां (भ) द्वारि क तिष्ठति।

प्रिय। जं अमच्चो आणवेदि। [ इति निष्क्रम्य क्षपणकं दृष्ट्वा पुनः प्रविश्य च ] अमच्च! एसो क्खु संवच्छरिओ क्खवणओ (२६)

राक्ष। [ स्वगतम् अनिमित्तं सूचयित्वा ]। कथं प्रथममेव क्षपणकदर्शनम्?

प्रिय। जीवसिद्धी। (२७)

राक्ष। [ प्रकाशम्। ] अबीभत्सदर्शनं (म) कारयित्वा प्रवेशय।

प्रिय। जं अमच्चो आणवेदि। (२८)

[ इति निष्क्रान्तः। ]

[ ततः प्रविशति क्षपणकः। ]

क्षप।—

सासणमलिहन्ताण प्पडिवज्जह, मोहवाहिवेज्जाणं।
जे पढममेत्तकडुअं, पच्छा पत्थ उवदिसन्ति ॥ (२८) (२९)

[ उपसृत्य। ] धम्मसिद्धी होदु सावआणं।

राक्ष। भदन्त! निरूप्यतां, तावत् अस्माकं प्रस्थानयोग्य दिवस। (य)

---

(२६) यत् अमात्य आज्ञापयतीति। अमात्य! एष खलु सांवत्सरिकः क्षपणकः।

(२७) जीवसिद्धिः।

(२८) यत् अमात्य आज्ञापयति।

(२९) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम्।
ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति ॥ (१८)
धर्मसिद्धिर्भवतु श्रावकाणाम्।

क्षप। [नाट्येन विलोक्य।] सावका! णिरूविदे मुहुत्ते। आ-मज्झण्हादो णिव्वुत्तसव्वकल्लाणा सोहणा तिही संपुण्णचन्दा पुण्णमासी, तुह्माणं उत्तलाए दिसाए दक्खिणां दिसं पत्थिदाणं (८) अदक्खिणे नक्खत्ते। अवि अ,—

अत्थाहिमुहे सूले, उदिदे संपुण्णमण्डले चन्दे।
गमणं बुहस्स लग्गे, उदिदत्थमिदे अ केदुम्मि॥ (२०) (१९)

राक्ष। भदन्त! तिथिरेव तावत् न शुध्यति।

क्षप। सावका!—

एक्कगुणा होइ तिही, चउग्गुणे होइ णक्खत्ते।
चउसट्ठिगुणे लग्गे, एसे दीसदि जोदिससिद्धंते (२१)॥ २०
लग्गे होइ सुलग्गे, कूलग्गहं पलिहलिज्जासु।
पाविहि दीहं लाह चन्दस्स बलेण गच्छन्ते (२२)॥ २१

(२०) श्रावक! निरूपितो मुहूर्त्तः। आ मध्याह्नात् निवृत्तसर्व्वकल्याणा शोभना तिथिः सम्पूर्णचन्द्रा पौर्णमासी युष्माकमुत्तरस्या दिशो दक्षिणां दिशं प्रस्थितानाम् अदक्षिणं नक्षत्रम्।

अपि च,—अस्ताभिमुखे सूर्य्ये, उदिते सम्पूर्णमण्डले चन्द्रे।
गमनं बुधस्य लग्ने, उदितास्तमिते च केतौ॥

(२१) श्रावक!—
एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रम्।
चतुःषष्टिगुणं लग्नम्, एतद्दृश्यते ज्योतिषसिद्धान्ते॥

(२२) लग्नं भवति सुलग्नं, क्रूरग्रहं परिहर याय।
प्राप्स्यसि दीर्घं लाभं चन्द्रस्य बलेन गच्छन्॥

(८) निरूपितः अवधारितः। मुहूर्त्तः शुभक्षणः। आ मध्याह्नात् मध्याह्नकालम् आरभ्य निवृत्तं निविडं सर्व्वं सकलं कल्याणं मङ्गलं यस्यां सा निवृत्तसर्व्वकल्याणा निविडसकलमङ्गला अतएव अशोभना निन्दनीया, पौर्णमासी पञ्चान्तत्वात् तत्र यात्रायाः वैकल्येन अशास्त्रीयत्वात् अशोभनत्वम्। अदक्षिणं अननुकूलम्।

शूरे सूर्य्ये अस्ताभिमुखे अस्तगमनोन्मुखे सम्पूर्णमण्डले पञ्चदशकले चन्द्रे उदिते सति, केतौ केतुग्रहे राहुग्रहे च, उभयोरेकशरीरत्वात् एकनामाभिधानमिति ढुण्ढिराजः। उदितास्तमिते एकस्मिन् उदिते अन्यस्मिन् अस्तमिते उभयोरेकदा उदयस्यासम्भवात्। बुधस्य सौम्यस्य लग्ने मिथुनलग्ने गमनं कर्त्तव्यमिति शेषः। यद्यपि विरसभावात्

शिष्यः। जं अमच्चो आणवेदि। [इति निष्क्रम्य पुनः प्रविश्य च]। अत्था-हिलासो भअवं सूले। (१६) (ख)

राक्ष। [आसनादुत्थाय विलोक्य च।] अये ! अस्ताभिलाषी भगवान् सहस्रदीधितिः। (क) तथाहि,—

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा।
एते तस्मिन् निवृत्ताः पुनरितरककुप्प्रान्तपर्यस्तबिम्बे
प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः॥२२

[इति निष्क्रान्ताः सर्वे]।

इति चतुर्थोऽङ्कः समाप्तः॥

---

(१६) यत् अमात्य आज्ञापयति। अस्ताभिलाषी भगवान् सूर्यः। [पाठान्तरीय-संस्कृतं यथा—"अर्थाभिलाषी भगवान् सूरः" इति]।

---

(ख) सूरः सूर्यः अस्ताभिलाषी अस्तोन्मुखः, दिवा अवसन्ना इत्यर्थः। अन्यपक्षे तु रक्षसो-न्मुख राक्षसस्य अर्थाभिलाषी इति ध्वनिता॥

(क) सहस्रं दीधितयो यस्य सः सहस्रदीधितिः सहस्रकिरणः, सूर्यः।

आविर्भूतानुरागा इत्यादि। एते उपवनतरवः आरामस्थिता वृक्षाः, अर्थे अन्यत्रापि आविर्भूतः प्रकटीभूतः अनुरागः भक्तिः रक्तवर्णश्च येषां ते आविर्भूतानुरागाः, उदयगिरेः उदयपर्वतात् उज्जिहानस्य उद्गच्छतः भानोः सूर्यस्य पुरस्तात् अग्रे पत्रच्छायैः पत्राणां छायाभिः उपलक्षिताः सन्तः छायारूपेणेत्यर्थः। आशु शीघ्रमेव दूरं गत्वा दूर-वर्तिनो भूत्वेत्यर्थः। तस्मिन् सूर्ये, इतरस्मिन् अन्यस्मिन् ककुप्प्रान्ते पर्यस्तं पतितं बिम्बं मण्डलं यस्य तस्मिन् इतरककुप्प्रान्तपर्यस्तबिम्बे अपरदिगन्तपतितमण्डले सति निवृत्ताः परावृत्ताः। सेवमानाः भजमानाः भृत्याः दासाः, प्रायः बाहुल्येन प्रचलितः विलुप्तः विभवः ऐश्वर्यं यस्य सः तथोक्तः, तं प्रचलितविभवं विनष्टसम्पदं स्वामिनं प्रभुं त्यजन्ति परि-हरन्ति स्वार्थैकतत्पराः धूर्तभृत्याः सम्पत्समये प्रभुपरतन्त्रा अपि विपदि विरक्ता भवन्तीति भावः। अत्र अर्थान्तरन्यासोऽलङ्कारः, "यत्र, कोऽप्यर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः" इति लक्षणात् स च उत्प्रेक्षया संसृज्यते। स्रग्धरावृत्तम्॥ २२

इति मुद्राराक्षसव्याख्यायां शिष्यबोधिनीसमाख्यायां चतुर्थोऽङ्कः समाप्तः॥

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति लेखमलङ्कारस्थगिकाञ्च समुद्राम् (क) आदाय सिद्धार्थकः ]।

सिद्धा। हीमाणहे (ख) हीमाणहे ॥—

बुद्धिजलणिज्झरेहिं सिच्चन्ती देसकालकलसेहिं ।
दंसइस्सदि कज्ज फलं गुरुअं चाणक्कणीदिलदा (१) ॥ १

गहीदो मए अज्जचाणक्केण पढमलेहिदो लेहो, अमच्चरक्खसस्स मुद्दालञ्छिदो। तस्स ज्जेव मुद्दालञ्छिदा इअं आहरणपेडिआ। चलिदोह्मि किल ( ग ) पाडलिउत्तं, ता जाव गच्छह्मि। [ परिक्रम्य अवलोक्य च। ] कहं खवणओ आअच्छदि? जाव से असउणभूदं इमस्स दंसणं, ता आदिच्चदंसणेण पडिहणामि। (२) (घ)

---

(१) आर्यायाम् आर्यम्।—

बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलशैः ।
दर्शयिष्यति कार्य फलं गुरुकं चाणक्यनीतिलता ॥

(२) गृहीतो मया आर्यचाणक्येन प्रथमलेखितो लेखः अमात्यराक्षसस्य मुद्रालाञ्छितः। तस्यैव मुद्रालाञ्छिता इयम् आभरणपेटिका। चलितोऽस्मि किल पाटलिपुत्रं, तद् यावद् गच्छामि। कथं क्षपणक आगच्छति? यावदस्य अशकुनभूतमस्य दर्शनं तदादित्यदर्शनेन प्रतिहन्मि।

---

(क) लेखं पत्रिकां। अलङ्कारस्थगिकां आभरणाधारविशेषं। समुद्रां राक्षसनामाङ्कितमुद्रया चिह्नितां। आदाय गृहीत्वा।

(ख) आश्चर्यद्योतनाय प्रयुक्तमेतत्पदद्वयं निपातनसिद्धम्।

बुद्धिजलनिर्झरैरित्यादि। बुद्धिः प्रज्ञा एव जलं बुद्धिजलं तस्य निर्झराः निःसरणस्थानानि तैः बुद्धिजलनिर्झरैः, देशाः स्थानानि कालाः समयाः अनुकूला इत्यर्थः ते एव कलसाः तैः देशकालकलसैः सिच्यमाना सलिलैः आर्द्रीक्रियमाणा इति यावत् चाणक्यस्य नीतिरेव लता व्रतती कार्यं गुरुकं महत् प्रचुरमित्यर्थः फलं इष्टसिद्धिरूपं लाभं दर्शयिष्यति। अत्र परम्परितरूपकालङ्कारः ॥ १

(ग) मुद्रालाञ्छिता अङ्गुलिमुद्रयाचिह्निता। आभरणानां पेटिका मञ्जुषा आभरणपेटिका। किलेत्यलीके चलनमलीकमित्यर्थः।

(घ) अशकुनभूतं अमङ्गलभूतं दुर्निमित्तसूचकं तस्य क्षपणकस्य दर्शनं साक्षात्

सिद्धा। जाणिदं भदन्तेण देसन्तलं चलिदोह्मि। ता कधेदु भदन्तो कीदिसो अज्ज दिअसो? (८) (छ)

क्षप। [विहस्य] सावका! मुण्डं मुण्डिअ तुमं णक्खत्ताइं पुच्छसि? (९) (ज)

सिद्धा। भदन्त! सम्पदं पि किं जादं? ता कधेहि, जइ अत्तणो अणुऊलं भविस्सदि, ता गमिस्सं, अण्णधा णिवत्तिस्सं। (१०) (झ)

क्षप। सावकाणं सम्पदं एदस्सिं मलयकेदुकडए अणुऊलेण अणणुऊलेण वा, अगहीदमुद्देण (ञ) ण गच्छीअदि। (११)

सिद्धा। भदन्त! कहेहि कुदो क्खु अअं? (१२)

क्षप। सावका। णिसामेहि. पढमं दाव एत्थ मलअकेदुकडए लोअस्स अणिवालिअणिक्कमणप्पवेसो आसी। दाणिं इदो पच्चासण्णे कुसुमउरे, ण कोवि अमुद्दालंच्छिदो णिक्कमिदुं पविसिदुं वा

---

(८) ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि। तत् कथयतु भदन्तः कीदृशोऽद्य दिवसः?

(९) उपासक! मुण्डं मुण्डयित्वा त्वं नक्षत्राणि पृच्छसि?

(१०) भदन्त! साम्प्रतमपि किं जातम्? तत् कथय, यदि आत्मनः अनुकूलं भवेत्, तदा गमिष्यामि, अन्यथा निवर्त्तिष्ये।

(११) उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटके अनुकूलेन अननुकूलेन वा, अगृहीतमुद्रेण न गम्यते।

(१२) भदन्त! कथय कुतः खलु अयम्?

---

(छ) कीदृश यात्रायोग्यः शुभः अद्य।

(ज) "क्षौर विशाखाप्रतिपत्सुवर्ज्यं" इति श्रुतिः नक्षत्रविशेषे क्षौरनिषेधात् तत्पूर्वं नक्षत्रालोचनमुचितं, मुण्डनात् परं नक्षत्रालोचनं न सङ्गतं एवं यात्रायाः पूर्वं तद्दिवसीय वारतिथ्यादीनां विचारः कर्त्तव्यः, कृतायां यात्रायां तत्प्रश्नो निरर्थक इत्यर्थः।

(झ) साम्प्रतं अधुना किं जातं भूते केवलं कृतयात्रोऽहं प्रस्थातुमुद्यतः न पुनः प्रस्थित इत्यत इत्यर्थः। आत्मनः स्वस्य अनुकूलं सहायं उपकारकमिति यावत्। अन्यथा नचेत्, अननुकूले सतीत्यर्थः। निवर्त्तिष्ये प्रत्यावर्त्तिष्ये निवृत्तो भविष्यामीत्यर्थः।

(ञ) मलयकेतुकटके मलयकेतुशिविरे। अनुकूलेन सहायेन स्वपक्षीयेण इत्यर्थः। अननुकूलेन असहायेन विपक्षेण इत्यर्थः। अगृहीतमुद्रेण अलब्धचिह्नेन अगृहीतपत्रादिकेन इत्यर्थः।

अणमोदीअदि । ता जइ भाउराअणस्स मुद्दालंछिदोसि, तदो गच्छ वीसत्थो, अण्णधा णिव्वाहिअ णिउत्तअ चिट्ठ । मा तुमं गुम्मट्ठाणाधिवेहिं संजमिदकलचलणो राअउलं प्पवेसीअसि ।(१३)(ट)

सिद्धा। किं ण आणादि भदन्तो, जधा अमच्चरक्खसस्स केलिअरो पच्चिओ (ठ) सिद्धत्थओ अहं त्ति ? ता असुद्दालंछिदंपि मं णिक्कमन्तं कस्स सत्ती णिवारेदुं ? (१४)

क्षप। सावआ । रक्खसस्स पिसाचस्स वा केलिअरो होहि । णत्थि उण दे असुद्दालंछिदस्स णिक्कमणोवाओ । (१५)

सिद्धा। भदन्त ! मा कुप्प, भण मे कज्जसिद्धो होदु त्ति (१६)(ड)

---

(१३) उपासक ! निशामय, प्रथमं तावदत्र मलयकेतुकटके लोकस्यानिवारितनिष्क्रमप्रवेश आसीत् । इदानीम् इत प्रत्यासन्ने कुसुमपुरे, न कोऽपि अमुद्रालाञ्छितो निष्क्रमितुं प्रवेष्टुं वा अनुमीयते । तद् यदि भागुरायणस्य मुद्रालाञ्छितोऽसि, तदा गच्छ विश्वस्त, अन्यथा निवृत्य निभृतस्तिष्ठ । मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजकुलं प्रवेश्यसे ।

(१४) किं न जानाति भदन्त, यथा अमात्यराक्षसस्य केलिकरः पार्श्विकः सिद्धार्थकोऽहमिति ? तद् अमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् ?

(१५) उपासक । राक्षसस्य पिशाचस्य वा केलिकरो भव । नास्ति पुनस्ते अमुद्रालाञ्छितस्य निष्क्रमणोपायः ।

(१६) भदन्त ! मा कुप्य, भण मे कार्यसिद्धिर्भवतु इति ।

---

(ट) न निवारित निषिद्ध निष्क्रम बहिर्गमनं प्रवेशश्च यस्य स अनिवारितनिष्क्रमप्रवेशः, अनिषिद्धगमनागमनः, लोक इति जनाकर्षपदस्य विशेषणं । प्रत्यासन्ने समीपवर्त्तिनि । मुद्रया चिह्नविशेषेण लाञ्छितः चिह्नितः न भवतीति अमुद्रालाञ्छितः, अप्राप्तदशपत्र इत्यर्थः । अनुमीयते अनुमन्यते । निभृतम् निःशब्देन । गुल्मस्थानं अपराधिनां निरोधस्थानं तस्य अधिपैः अध्यक्षैः । संयमितः बद्धः करचरणं यस्य सः संयमितकरचरणः बद्धहस्तपादः ।

(ठ) केलिकरः क्रीडाकरः रहस्यालापी इत्यर्थः, पार्श्वे चरतीति पार्श्विकः पार्श्वचरः, नितान्तविश्वस्तभाजनमित्यर्थः । शक्तिः सामर्थ्यं । निवारयितुं निषेद्धुम् ।

(ड) भव कथय । कार्यसिद्धिः कार्यसाफल्यं । भवतु अस्तु ।

क्षप। सावका। गच्छ होदु दे कज्जसिद्धी। अहपि भागुराअ-णादो पाडलिउत्त गन्तु मुद्द पडिच्छेमि। (१७)

[ इति उभौ निष्क्रान्तौ ]।

[ इति प्रवेशक (ढ) ]।

[ तत प्रविशति पुरुषेण अनुगम्यमानो भागुरायण ]।

भागु। [ आत्मगतम् ] अहो ॥ विचित्रता आर्य्यचाणक्यनीते ।

कुत ?—

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
मुहु सम्पूर्णाङ्गी, मुहुरतिकृशा कार्य्यवशत ।
मुहुर्भ्रश्यद्बीजा, मुहुरपि बहुप्रापितफले
त्यहो ! चित्राकारा नियतिरिव नीतिर्नयविद ॥ ३

[ प्रकाशम्। ] भद्र भासुरक ! न मा दूरीभवन्तमिच्छति कुमार । अतोऽस्मिन् एव आस्थानमण्डपे विन्यस्यताम् आसनम । (ण)

(१७) उपासक। गच्छ, भवतु ते कार्यसिद्धि। अहमपि भागुरायणात् पाटलिपुत्र गन्तु मुद्रां प्रतीच्छामि।

(ढ) प्रवेशक, नीचपात्राभ्यां कथांशानां सूचनात् अयं प्रवेशक। यथा "प्रवेशको ऽनुदात्तोक्त्या नीचपात्रप्रयोजित । अङ्कद्वयान्तर्विज्ञेय शेषं विष्कम्भके यथा।" इति साहित्यदर्पणम्।

मुहुर्लक्ष्योद्भेदा इत्यादि। मुहु कदापि लक्ष्य ज्ञेय बीजस्य इत्यर्थ उद्भेद प्रकाशो यस्या सा लक्ष्योद्भेदा अनुमेयाङ्कुरा, मुहु कदाचित् अधिगमस्य बोधस्य अभावेन गहना कठिना अधिगमाभावगहना अननुमेयस्वरूपा, मुहु सम्पूर्णाङ्गी परिपुष्टावयवा, मुहु कदाचित् कार्य्यवशत कर्तव्यानुरोधेन अतिकृशा क्षीणशरीरा, मुहु कदाचित् भ्रश्यद्बीजा विलुप्तहेतुका, मुहुरपि कदाचिदपि बहु अत्यर्थं यथा तथा प्रापित फलं यया सा बहुप्रापित फला अधिगमितबहुफला इत्यर्थ। इति एवम्प्रकारेण चित्राकारा विचित्ररूपा नियति इव नयविद नीतिनिपुणस्य नीति भवतीति शेष। अत्र ढुण्डिराज—मुहुर्लक्ष्योद्भेदा मुखसन्धौ बीजोद्भिन्ना सती बहुधा विस्तारिणीत्यर्थ। प्रतिमुखे लक्ष्यालक्ष्यतया पुनर्व्यक्ते गहनातिकृशा च गर्भे मुहुर्दृष्टनष्टान्वेषणात् नष्टादिव बीजसमुद्योगो यस्या सा नष्टोज्जा। विमर्शे बीजस्य स्फुटमेव दर्शनात् सम्पूर्णाङ्गीत्युक्तं। निर्वहणे सर्व्वार्थोपसंहारात् बहुप्रापित फलेत्युक्तं। ईदृशी नयविदश्चाणक्यस्य नीतिर्नियतिरिव चित्राकारा। नियते चाणक्य नीतेश्च कार्य्याणां विचित्राकारता कारणं उपपद्यते। इति। अत्र अप्रस्तुतप्रशंसालङ्कार उपमया सङ्कीर्यते। शिखरिणी वृत्तम् ॥ ३

(ण) दूरीभवन्तं दूरे वर्त्तमानं। कुमार मलयकेतु। आस्थानमण्डपे सभा-मण्डपैकदेशे। विन्यस्यतां स्थाप्यतां।

पुरु। एदं आसणं, उपविसदु अज्जो। (१८)

भागु। [उपविश्य] भद्र भासुरक! यः कश्चित् मुद्रार्थी। (त) मां द्रष्टुम् इच्छति, स त्वया प्रवेशयितव्यः।

पुरु। जं अज्जो आणवेदि। (१९)

[इति निष्क्रान्तः]।

भागु। [स्वगतम्] कष्टम् एवमपि नाम अयम् अस्मासु स्नेहवान् कुमारो मलयकेतुरभिसन्धातव्य इति अहो दुष्करम्। (थ) अथवा,—

कुले, लज्जायाञ्च स्वयशसि च, माने च, विमुखः,
शरीरं विक्रीय क्षणिकधनलाभाद्धनवति।
तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना,
विचारातिक्रान्तः, किमिति परतन्त्रो विमृशति॥ ४

[ततः प्रविशति प्रतीहार्यनुगतो मलयकेतुः (द)]।

मल। [स्वगतम्।] अहो! राक्षसं प्रति मे विकल्पबाहुल्यात् आकुला (ध) बुद्धिर्न निश्चयम् अधिगच्छति। कुतः।—

---

(१८) एतदासनम्, उपविशतु आर्यः।

(१९) यदार्य आज्ञापयति।

---

(त) मुद्रार्थी आदेशपत्रार्थी इत्यर्थः।

(थ) कष्टं दुःखं। अयं कुमारः मलयकेतुः अस्मासु मयि एवं अकपटं यथा तथा स्नेहवान् प्रेमवान् भवतीति शेषः। अभिसन्धातव्यः वञ्चयितव्यः दुष्करं दुःखकरं असुकरं। अथवा यथाकार्य, का गतिः पराधीनस्य इत्याह—

कुले इत्यादि कुले वंशे तदुचितसदाचारे, लज्जायां कुकर्माचरणजन्यत्रपायां स्वयशसि निजसुख्यातौ, माने समुचितगौरवे, च विमुखः पराङ्मुखः परतन्त्रः पराधीनो जनः, क्षणिकधनलाभात् विनश्वरवित्तलाभाशया धनवति वैभववति भूमिपतौ शरीरं देहं विक्रीय धनविनिमयेन मनुष्यान्तरे विसृज्य इत्यर्थः। तदाज्ञां प्रभोरादेशं कुर्वाणः अनुतिष्ठन्, विचारः सदसद्विवेचनं आतक्रान्तः अतीतः विचारातिक्रान्तः सदसद्विचारशून्यः सन् अधुना एतत् हितं एतत् अहितं इति किमिति कथं विमृशति विचारयति, न कथमपि विचारयितुमर्हतीत्यर्थः अत्र काव्यलिङ्गमलङ्कारः। शिखरिणीवृत्तम्॥ ४

(द) प्रतीहार्या दौवारिकया अनुगतः।

(ध) विकल्पबाहुल्यात् संशयप्राचुर्यात् आकुला उद्विग्ना।

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना,
किं चाणक्यनिराकृतेन कृतिना मौर्येण सन्धास्यते ?।
स्थैर्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवेत् ?
इत्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥ ५ ॥

[प्रकाशम्।] विजये! क्व भागुरायणः ?

[प्रतीहारी।] कुमार! एसो क्खु कडआदो णिक्कमिदुकामाणं मुद्दासम्पदाणाधिआरे चिट्ठदि।-(२०) (न)

मल। विजये! मुहूर्तं निभृतपदसञ्चारा भव, यावदस्य पराङ्मुखस्य एव पाणिभ्यां नयने पिदधामि। (प)

प्रती। जं कुमारो आणवेदि। (२१)

भागुरक। [प्रविश्य] अज्ज! एसो क्खु, क्खवणओ मुद्दाणिमित्तं अज्जं पेक्खिदुमिच्छदि। (२२)

भागु। प्रवेशय।

(२०) कुमार! एष खलु कटकान्निष्क्रमितुकामानां मुद्रासम्प्रदानाधिकारे तिष्ठति।
(२१) यत् कुमार आज्ञापयति।
(२२) आर्य! एष खलु क्षपणको मुद्रानिमित्तम् आर्यं प्रेक्षितुमिच्छति।

भक्त्या इति। राक्षस इति कर्तृपदमूह्यम्। नन्दकुले नन्दवंशे यः अनुरागः आसक्तिः तेन दृढया भक्त्या चाणक्यनिराकृतेन कौटिल्यप्रत्याख्यातेन नन्दान्वयालम्बिना नन्दवंशाश्रयिणा, कृतिना गुणवता मौर्येण चन्द्रगुप्तेन सह सन्धास्यते सन्धिं करिष्यति। वा अथवा भक्तिरेव गुणः उत्कर्षः तस्य स्थैर्यं दार्ढ्यं विगणयन् विचारयन् मम इदं भक्ति दृढं समनुष्ठितव्यं तथा चलितया सन्धा प्रतिज्ञा यस्य सः सत्यसन्धः स्थिरप्रतिज्ञः भवेत्, मौर्यं विजित्य सर्वं मलयराजं गुणमर्पयिष्यामीति पूर्वाङ्गीकारपालयिता स्यात्। इति इत्थं आरूढं अधिष्ठितं कुलालचक्रं येन तत् आरूढकुलालचक्रमिव कुम्भकारचक्रोपरिस्थितमिव मे मम चेतः मनः, चिरं भ्राम्यति सन्दिग्धं तिष्ठतीत्यर्थः। अत्र उत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

(न) कटकात् शिविरात्। निष्क्रमितुकामानां निर्गमनाभिलाषिणां। मुद्रायाः सम्प्रदाने समर्पणे एव अधिकारः अधिकृतकर्म्म तत्र मुद्रासम्प्रदानकर्म्मणीत्यर्थः।

(प) निभृतः निश्चलः पदसञ्चारः पदक्षेपो यस्याः सा निभृतपदसञ्चारा धीरपदविक्षेपा। पाणिभ्यां हस्ताभ्यां। नयने चक्षुषी पिदधामि आच्छादयामि। पश्चादभिगमनलक्षणेन नयनाच्छादनेन भागुरायणस्य चैवं तदङ्गीकरणमात्मीयत्वं सूचितम् ॥

भागु। जं अज्जो आणवेदि। (२३)

[ इति निष्क्रान्तः ]।

क्षपणक। [ प्रविश्य ] सावकाण धम्मलाहो होदु। (२४)

भागु। [ सात्मेन अवलोक्य स्वगतम् ] अये राक्षसस्य मित्रं, जीवसिद्धि ॥ [ प्रकाशम् ] भदन्त! न खलु राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते? (क)

क्षप। [ कर्णौ पिधाय ] सन्तं पावं, सन्तं पावं सावका! तहिं ज्जेव गमिस्सं, जहिं रक्खसस्स पिसाचस्स वा णामं पि ण सुणीअदि। (२५)

भागु। भदन्त! बलीयांस्ते सुहृदि प्रणयकोपः। तत् किम् अपराद्धं राक्षसेन भदन्तस्य? (ख)

क्षप। सावका! ण मम किं पि रक्खसेण अवरद्धं, सअं ज्जेव्व मन्दभाओ अत्तणो कम्मसु लज्जामि। (२६) (ग)

भागु। भदन्त! वर्द्धयसि मे कुतूहलम्—"।

मल। [ स्वगतम् ] मम च। (घ)

भागु। "—श्रोतुम् इच्छामि।

मल। [ स्वगतम् ] अहमपि।

---

(२३) यद् आर्य आज्ञापयति।

(२४) उपासकानां धर्मलाभो भवतु।

(२५) शान्तं पापं, शान्तं पापम्। उपासक! तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते।

(२६) उपासक! न मे किमपि राक्षसेनापराद्धं, स्वयमेव मन्दभाग्य आत्मनः कर्मसु लज्जे।

---

(क) न खलु इति काकूक्त्या प्रश्नो व्यज्यते। किञ्चित् किमपि, प्रयोजनं कार्यं। उद्दिश्य लक्ष्यीकृत्य।

(ख) बलीयान् बलवत्तरः। सुहृदि मित्रे। प्रणयकोपः प्रेमाभिमानः। अपराद्धं आगस्कृतं।

(ग) आत्मनः कर्मसु—मित्रद्रोहरूपकार्येषु।

(घ) मम च कुतूहलं वर्द्धते इति शेषः।

क्षप। सावका। किं एदिणा असुणिदव्वेण सुदेण ? (२७) (य)

भागु। भदन्त ! यदि रहस्यं, तदा तिष्ठतु। (र)

क्षप। सावका। ण हि रहस्सं। (२८)

भागु। तर्हि कथ्यताम्।

क्षप। सावका। णत्थि एदं, तथावि ण कधइस्सं अदिणिसंसं। (२९) (ल)

भागु। भदन्त ! अहमपि मुद्रां न दास्यामि।

क्षप। [स्वगतम्।] युक्तम् इदानीम् अर्थिने कथयितुम्। (व) [प्रकाशम्] का गदी ? एसे णिवेदेमि, सुणादु सावको। अत्थि दाव हगे अधण्णा पढम पाडलिउत्ते णिवसमाणो रक्खसस्स मित्त त्तणं उवगदे। तहि अवसले रक्खसेण गूढं विसकण्णापओअं समुप्पादिअ, घादिदे देवे पव्वदोसले। (३०) (श)

मल। [सबाष्पमात्मगतम्।] कथं, राक्षसेन घातितस्तातो न चाणक्येन ?

भागु। भदन्त ! ततस्ततः ?

---

(२७) उपासक ! किमनेन अश्रोतव्येन श्रुतेन ?

(२८) उपासक ! न हि रहस्यम्।

(२९) उपासक ! नास्तीदं, तथापि न कथयिष्यामि अतिनृशंसम्।

(३०) का गतिः ? एष निवेदयामि, शृणोतु उपासकः। अस्ति तावद् अहमधन्य प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः। तस्मिन्नवसरे राक्षसेन गूढं विषकन्याप्रयोगं समुत्पाद्य घातितो देवः पर्वतेश्वरः।

---

(य) अश्रोतव्येन श्रवणायोग्येन। श्रुतेन आकर्णितेन। किं भवेदित्यर्थः।

(र) रहसि भवं रहस्यं गोपनीयं।

(ल) अति नृशंसे अति निष्ठुरे।

(व) अर्थिने याचकाय, स्वस्वार्थे प्रदर्शितादराय इत्यर्थः।

(श) अस्ति तावत् श्रोतव्यमिति शेषः। अधन्य पापात्मा। प्रथम आदौ। मित्रत्वं सुभाव। अवसरे समये। गूढं अप्रकाशं। विषकन्या एव प्रयोगः मारणोपायः तं विष कन्याप्रयोगं समुत्पाद्य विषकन्यारूपं वधोपायमवलम्ब्येत्यर्थः। घातितः व्यापादितः मम त शेषः।

क्षप। तदो हगे लक्खसस्स मित्तं कदुअ, चाणक्कहदएण अवि-कालं अवराधी णिव्वासिदो। दाणीं पि लक्खसेण अणेअअकज्ज-कुसलेण किंपि तादिसं आलिहीअदि, जेण हगे जीवलोआदो णिक्कासिज्जेमि। (२१) (च)

भाग। भदन्त। प्रतिश्रुतराज्यार्द्धमयच्छता चाणक्यहतकेन इदमकार्यमनुष्ठितं, (छ) न राक्षसेन इति श्रुतम् अस्माभिः।

क्षप। [कर्णौ पिधाय।] सन्तं पावं। सावका! चाणक्को विस-कन्नाए णामंपि ण जाणादि। तेण ज्जेव दुट्ठबुद्धिणा लक्खसेण एसा अकज्जसिद्धी किदा। (२२)

भाग। भदन्त! कष्टमिदम्, इयं मुद्रा दीयते, एहि कुमारं श्रावयाव। (ज)

मल। श्रुत, सखे। श्रवणविदारणं वचः
सुहृन्मुखाद्रिपुमधिकृत्य भाषितम्।
पितुर्वधव्यसनमिदं हि येन मे
चिरादपि द्विगुणमिवाद्य वर्धते ॥ ६

---

(२१) ततोऽहं राक्षसस्य मित्रं कृत्वा, चाणक्यहतकेन सधिकारं नगरान्निर्वासित। इदानीमपि राक्षसेन अनेकाकार्यकुशलेन किमपि तादृशमारभ्यते, येनाहं जीवलोकात् निष्कासयिष्ये।

(२२) शान्तं पापम्। उपासक! चाणक्यो विषकन्याया नामापि न जानाति। तेनैव दुष्टबुद्धिना राक्षसेन एषा अकार्यसिद्धिः कृता।

---

(च) सधिकारं सावमानं। निर्वासित निराकृत। अनेकानि अकार्याणि कुत्‌-र्माणि तेषु कुशल तेन अनेकाकार्यकुशलेन विविधकुकर्मनिपुणेन। किमपि अनिर्वचनीय मित्यर्थं तादृशं पर्वतेश्वरमारणसदृशं कुकर्म इति शेष। अवयर्थेनुगिषक इति गूढोऽर्थः। आरभ्यते उपक्रम्यते। येन कर्मणा। जीवलोकात् संसारात् निष्कासयिष्ये बहिष्कृतो भवि-ष्यामि। मृत्यु सुनिश्चित इत्यर्थ।

(छ) प्रतिश्रुतं प्रामाणीकृत राज्यार्द्धं अयच्छता अददता। अकार्यं दुष्कर्म। अनुष्ठित आचरित।

(ज) एहि आगच्छ। संश्रावयाव सम्यक् श्रावयिष्याव इत्यर्थ।

श्रुतमित्यादि। हे सखे रिपु मम राक्षसं अधिकृत्य विषयीकृत्य तमाश्रित्येत्यर्थ। सुहृन्मुखात् मित्रवदनात् अतिविश्वासभाजनादित्यर्थ। भाषितं कथितं श्रवणविदारण

भाग। [स्वगतम्।] अये श्रुतं मलयकेतुहतकेन! कृतार्थोऽस्मि। (क)

मलय। [प्रत्यक्षवद् आकाशे लक्ष्यं बद्धा।] राक्षस! युक्तमिदम्।—

मित्रं ममायमिति निर्वृतचित्तवृत्तिं
विस्रम्भतस्त्वयि निवेशितसर्वकार्य्यम्।
तातं निपात्य, सह बन्धुजनाक्षितोयैः
अन्वर्थतोऽपि ननु राक्षस! राक्षसोऽसि॥ ७

भाग। [स्वगतम्।] रक्षणीया राक्षसस्य प्राणाः इति आर्य्यादेशः। भवतु एवं तावत्। [प्रकाशम्] कुमार! अलम् आवेगेन? आसनस्थं कुमारं किञ्चिद् विज्ञापयितुम् इच्छामि। (ख)

मलय। [उपविश्य।] सखे! किमसि वक्तुकामः?

भाग। कुमार! इह खलु अर्थशास्त्रव्यवहारिणाम् अर्थवशात् अरिमित्रोदासीनव्यवस्था न लौकिकानाम्-इव स्वेच्छावशात्। यतः तस्मिन् काले सर्वार्थसिद्धिं राजानम् इच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया सुगृहीतनामा देवः पर्व्वतेश्वर एव अर्थपरिपन्थी महान् अरातिः आसीत्। तस्मिंश्च काले, राक्षसेन इदम् अनुष्ठितम् (ग) इति न अतिदोषमिव अत्र पश्यामि। पश्यतु कुमारः,—

शीतपीडाकर मर्म्मभेदकमित्यर्थः, अतः वाक्यं श्रुतं आकर्णितं। येन वचसा मे मम हृदमेतत् पितुस्तस्य वधश्रवणं विभावसः इव चिरात् दीर्घकालात् अपि अद्य द्विगुणमिव विरहज्वरमिव द्विगुणितमिव वहन् इति लक्षति, पितृ देहादग्निदग्धसमत्वं मे तद्वियोगदुःखं मम चित्तं वहते इत्यर्थः। अत्र उत्प्रेक्षालङ्कारः। रुचिरावृत्तं। "जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात्॥ ६

(क) कृतार्थोऽस्मि—भागुरायणः। सुहृत्-आदिप्रमधिकृत्येवमेव सुहृत्त्वेन विश्वासवचनत्वं राक्षसस्य रिपुत्वञ्च मलयकेतुना दृढीकृतमिति च कृतार्थता।

मित्र ममायमित्यादि। ननु भो राक्षस! अयं राक्षसः मम मित्रं सुहृत् इति विस्रम्भात विश्वासात् "समौ विस्रम्भविश्वासौ" इत्यमरः। निवेशितं निहितं सर्वं कार्य्यं येन तं निवेशितसर्वकार्य्यं समर्पितकार्य्यजातं अतएव निर्वृतचित्तवृत्तिं निश्चिन्तमनोभावं तातं, बन्धुजनानां अक्षीणि नेत्राणि तेषां तोयैः बन्धुजनाक्षितोयैः आत्मीयजनाश्रुसलिलैः सह सार्कं निपात्य पातयित्वा हे राक्षस! त्वं अन्वर्थत यथार्थेन राक्षसः असि मर्म्मच्छेदकार्य्यसम्पादनात् सं या त्वं राक्षस इव हिंस्र इत्यर्थः। अत्र व्यङ्गोक्तिरलङ्कारः। वसन्ततिलकं वृत्तं॥ ७

(ख) आर्य्यादेशः आचार्य्योपदेशः। आवेगेन व्याकुलत्वेन। आसनस्थं आसनोपविष्टं। विज्ञापयितुं निवेदयितुं।

(ग) अर्थशास्त्रव्यवहारिणां नीतिशास्त्रविदां अर्थवशात् कार्य्यानुरोधात्, अरि, मित्र,

मित्राणि शत्रुत्वमिवानयन्तो, मित्रत्वमर्थवशाच्च शत्रून् ।
नीतिर्नयत्यस्मृतपूर्ववृत्तं, जन्मान्तरं जीवत एव पुंसः ॥ ८

तदत्र वस्तुनि अनुपालभ्यो राक्षसः, (घ) आ नन्दराज्यलाभाद् अनुपाल्यताम्, परतः तस्य परिग्रहे, परित्यागे वा, कुमारः प्रमाणं भविष्यति । (ङ)

मल । एवं भवतु । सखे ! सम्यक् दृष्टवानसि; अन्यथा अमात्यस्य वधे प्रकृतिक्षोभः स्यात् एवञ्च सन्दिग्धो (च) विजयः स्याद् अस्माकम् ।

पुरुष । (प्रविश्य ।) जेदु जेदु कुमारो । अज्ज अज्जस्स गुम्महाणाधिकिदो दीहचक्खू एव्व विज्ञवेदि, एसो क्खु अम्हेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुरिसो गहीदो, ( छ ) ता पच्चक्खीकरेदु णं अज्जो त्ति । (२२)

---

( २२ ) जयति जयति कुमार । आर्य्य आर्य्यस्य गुल्मस्थानाधिकृतो दीर्घचक्षुः एवं विज्ञापयति एष खलु अस्माभिः कटकात् निष्क्रामन् अगृहीतमुद्रः सलेखः पुरुषो गृहीतः, तत् प्रत्यक्षीकरोतु एनम् आर्य्य इति ।

---

मित्रं शत्रुः, उदासीनः मध्यस्थः तेषां व्यवस्था विचित्रा भवतीति शेषः । लौकिकानां प्राकृतलोकानामिव स्वेच्छावशात् इच्छानुसारेण न भवति । यत यस्मात् हेतोः तस्मिन् कार्ये महार्थे ) इच्छया अभिलषन । नीतिवशात् अतिमहत्तया । इव प्रभुः । कार्योपरि मत्ती कार्य्यप्रतिबन्धी । महान् प्रभुरदीनासहायतया भवति । अरातिः शत्रुः । इदं पथ्यस्मृ रमायत ।

मित्राणीत्यादि । अर्थवशात् कार्य्यानुरोधाद्धेतोः मित्राणि सुहृदः, शत्रून् रिपून् मित्रत्व बन्धुत्व आनयन्ती प्रापयन्ती इव नीतिः राजनीतिः जीवत विद्यमानजीवनात् एव पुंसः पुरुषान् ■ अस्मृत पूर्ववृत्तं यस्मिन् तत् अस्मृतपूर्ववृत्तं अविभावितपूर्ववृत्तान्तं अन्यत् जन्म जन्मान्तरं नयति प्रापयति । यथा—जन्मान्तरे पूर्वजन्मवृत्तं न स्मर्य्यते, तथा जीवत एव पुंसः राजतन्त्रनीतिवशात् पूर्व्वापरवृत्तादि विस्मर्य्यते इति भावः । अत्रोत् प्रेक्षालङ्कारः । इन्द्रवज्राछन्दः । "स्यादिन्द्रवज्रा यदि तौ जगौ गः ।" इति लक्षणात् ॥ ८

( घ ) अत्र वस्तुनि अस्मिन् विषये । अनुपालभ्य अतिरस्कार्य्य ।

( ङ ) परतः तदनन्तरं । प्रमाणं कर्त्तव्याकर्त्तव्याधारकः कर्त्ता इत्यर्थः ।

( च ) सम्यक् दृष्टवान् साधु विवेचितवान् । प्रकृतीनां क्षोभः चाञ्चल्यं विराग इति यावत् । सन्दिग्धः संशयितः ।

( छ ) गुल्मस्थाने अपराधिनां निग्रहस्थाने अधिकृतः । अगृहीतमुद्रः अलब्धचिह्नः । मुद्रेण पत्रेण शून्यस्ते इति सरलार्थः ।

भाग। भद्र! प्रवेशय।

पुरु। जं अज्जो आणवेदि। (२४) [इति निष्क्रान्तः।]

[ततः प्रविशति पुरुषेण अनुगम्यमानः संयतः सिद्धार्थकः।] (च)

सिद्धा। [स्वगतम्।]—

तिप्पन्तीए गुणेसुं दोसेसुं परंमुहं करन्तीए।
अम्हारिसजणणीए पणमामो सामिभत्तीए (२५) ॥ ९

पुरु। [उपसृत्य।] अज्ज! अअं सो पुरिसो। (२६)

भाग। [नाट्येन अवलोक्य।] भद्र! किम् अयम् आगन्तुकः, आहो स्विद् इहैव कस्यचित् परिग्रहः? (ज)

सिद्धा। अज्ज! अहं क्खु अमच्चरक्खसस्स सेवओ! (२७)

भाग। भद्र! तत् किमर्थम् अगृहीतमुद्रः कटकात् निष्क्रामसि?

सिद्धा। अज्ज! कज्जगोरवेण तुवराविदोम्हि। (२८) (झ)

भाग। कीदृशं तत् कार्य्यगौरवं, यद् राजशासनम् उल्लङ्घयसि?

मल। सखे भागुरायण! लेखम् उपानय। (ञ)

सिद्धा। [भागुरायणाय लेखम् अर्पयति]।

भाग। [सिद्धार्थकहस्तात् लेखं गृहीत्वा मुद्रां दृष्ट्वा।] कुमार! अयं लेखः, राक्षसनामाङ्किता इयं मुद्रा।

---

(२४) यदार्य्य आज्ञापयति।

(२५) तृप्यन्त्यै गुणेषु, दोषेषु पराङ्मुखं कुर्वत्यै।
अस्मादृशजनन्यै प्रणमाम स्वामिभक्त्यै॥

(२६) आर्य्य! अयं स पुरुषः।

(२७) आर्य्य! अहं खलु अमात्यराक्षसस्य सेवकः।

(२८) आर्य्य! कार्य्यगौरवेण त्वरायितोऽस्मि।

---

तृप्यन्त्यै इत्यादि। गुणेषु अपर्णेषु सत्कार्य्येषु इत्यर्थः, तृप्यन्त्यै परितृप्तं समानायै, दोषेषु अवगुणेषु कुकार्य्येषु इत्यर्थः, पराङ्मुखं विमुखं कुर्वत्यै अस्मादृशानां प्रभुपरायणानां जनन्यै प्रतिपालिकायै स्वामिभक्त्यै प्रणमाम प्रणामं कुर्मः॥ ९

(ज) आगन्तुकः नवागतः। परिग्रहः परिजनः सेवकः। "पत्नीपरिजनादानमूलशापाः परिग्रहाः।" इत्यमरः।

(झ) कार्य्यस्य आदिष्टकर्म्मणः गौरवेण गुरुत्वात् कालक्षेपासहत्वात्। त्वरायितः त्वराम् इव आचरितः सत्वरः इत्यर्थः।

(ञ) लेखं पत्रं। उपानय प्रदापय।

मल। मुद्रां परिपालयन् उद्घाट्य दर्शय। (ट)

भागु। [तथा कृत्वा दर्शयति]।

मल। [गृहीत्वा वाचयति] "स्वस्ति, यथास्थाने कुतोऽपि, कोऽपि, कमपि, पुरुषविशेषम् अवगमयति। अस्मद्विपक्षं निराकृत्य, दर्शिता कापि सत्यवादिता सत्यवता। साम्प्रतम् एषामपि प्रथमसमुपन्यस्तसन्धीनाम् अस्मत्सुहृदां, पूर्वप्रतिज्ञातसन्धिपरिपणनवस्तुप्रतिपादनप्रोत्साहनेन सत्यसन्ध, प्रीतिम् उत्पादयितुम् अर्हति। एते हि एवमुपगृहीताः सन्तः, स्वाश्रयविनाशेनैव उपकारिणम् आराधयिष्यन्ति। अविस्मृतमपि एतत् सत्यवतः स्मारयामः। एतेषां मध्ये केचिद् अरेः कोषदन्तिभ्याम् अर्थिनः, केचिद् विषयेण इति। अस्मान् प्रति अलङ्कारत्रयञ्च, यत् सत्यवताऽनुप्रेषितं, तदुपगतम्। अस्माभिरपि लेखस्य अशून्यार्थं किञ्चिद् अनुप्रेषितं, तदुपगमनीयं, वाचिकञ्च आप्ततमात् सिद्धार्थकात् श्रोतव्यम्" इति। (ठ) सखे भागुरायण! कीदृशो लेखार्थः?

भागु। भद्र सिद्धार्थक! कस्य अयं लेखः?

सिद्धा। अज्ज! ण आणामि। (१८)

---

(१८) आर्य! न जानामि।

---

(ट) मुद्रां चिह्नं परिपालयन् रक्षन्। उद्घाट्य पत्रावरणादुन्मोच्य।

(ठ) स्वस्तीत्ययं मङ्गलबोधकः आरम्भे प्रयुज्यते। कुतोऽपि स्थानात्। कोऽपि पुरुषः कर्त्ता। कमपि पुरुषविशेषं। अवगमयति विज्ञापयति अस्मद्विपक्षं चाणक्यमिति गूढार्थः। निराकृत्य प्रत्याख्याय। प्रथमं प्राक् उपन्यस्तः विहितः सन्धिः यैः ते तेषां उपन्यस्तसन्धीनां। अस्मत्सुहृदां चित्रवर्म्मादीनां। पूर्व्वं प्राक् प्रतिज्ञातः प्रतिश्रुतः सन्धेः परिपणः प्रतिदानभूतं यत् वस्तु तस्य प्रतिपादनेन समर्पणेन यत् प्रोत्साहनं तेन। प्रीतिं परितोषं। उपगृहीताः प्राप्तानुग्रहाः स्वाश्रयस्य मलयकेतोः विनाशेन निधनेन। आराधयिष्यन्ति सेविष्यन्ते। अरेः शत्रोः मलयकेतोरित्यर्थः। कोषः धनराशिः दन्ती हस्ती ताभ्यां, अभेदेऽत्रसीया। अर्थिनः प्रार्थयितारः। विषयेण राज्येन। अस्मान् प्रति अस्मानुद्दिश्य। अनुप्रेषितं अनुप्रेरितं। उपगतं प्राप्तं। लेखस्य पत्रस्य अशून्यार्थं (सापादनार्थं) किञ्चित् अलङ्करणं। उपगमनीयं स्वीकर्त्तव्यं। "रिक्तहस्तेन नोपेयात् राजानं दैवतं गुरुम्।" इति वचनात् यत्किञ्चित् प्रेष्यते तदग्रहणेनानुग्राह्योऽस्मीति भावः। वाचिकं सन्देशवाक्यमस्मदिति शेषः। आप्ततमात् अतिविश्वस्तात्।

भागु। हे धूर्त्त! लेखो नीयते, न च ज्ञायते कस्यायम् इति। सर्वं तावत् तिष्ठतु, वाचिक त्वत्तः केन श्रोतव्यम्। (ड)

सिद्धा। [भय नाटयन्] तुम्हे हि। (४०)

भागु। किमस्माभि।

सिद्धा। तुम्हेहि गहीदो, ण आणामि का कधेति। (४१)

भागु। [सक्रोधम्] एव ज्ञास्यसि। भद्र भासुरक! बहिर्नीत्वा ताड्यतां तावत्, यावत् सर्वम् अनेन कथितं भवेत्।

भासु। जं अज्जो आणवेदि। (४२)

[इति सिद्धार्थकेन सह निष्क्रान्तः]।

[पुनः प्रविश्य]। अज्ज! इअं तस्स ताडीअमाणस्स कक्खादो मुद्दालञ्छिदा आहरणपेडिआ णिवडिदा। (४३) (ढ)

भागु। [विलोक्य] कुमार! इयमपि राक्षसमुद्राङ्कितैव।

मल। अयं लेखस्य अशून्यार्थो भविष्यति। इमाम् अपि मुद्रां परिपालयन् उद्घाट्य दर्शय।

भागु। [तथा कृत्वा दर्शयति]।

मल। [विलोक्य] अये! तदिदम् आभरणं, यन्मया स्वशरीराद् अवतार्य्य राक्षसाय प्रेषितम्। व्यक्तं चन्द्रगुप्तस्य अयं लेखः। (ण)

भागु। कुमार! एष निर्णीयते संशयः। (त) भद्र पुनरपि ताड्यताम्।

---

(४०) युष्माभिः।

(४१) युष्माभिर्गृहीतो न जानामि का कथयति।

(४२) यद् आज्ञापयति।

(४३) आर्य! इयं तस्य ताड्यमानस्य कक्षात् मुद्राङ्किता आभरणपेटिका निपतिता।

---

(ड) धूर्त्त वञ्चक। त्वत्तः भवतः। केन अन्येन।

(ढ) ताड्यमानस्य प्रह्रियमाणस्य। कक्षात् बाहुमूलात्। मुद्रालाञ्छिता मुद्राङ्किता। आभरणस्य पेटिका मञ्जूषा।

(ण) स्वशरीरात् निजगात्रात्। अवतार्य्य उन्मुच्य।

(त) निर्णीयते निश्चीयते।

पुरु। जं अज्जो आणवेदि। [इति निष्क्रम्य पुनः प्रविश्य च]। अज्ज! एसो क्खु ताडीअमाणो विण्णवेदि कुमारस्स सअं ज्जेव निवेदेमि त्ति। (४४)

मल। प्रवेशय।

पुरु। जं कुमारो आणवेदि। (४५)

[इति निष्क्रम्य सिद्धार्थकेन सह प्रविशति]।

सिद्धा। [पादयोर्निपत्य।] अभएण मे कुमारो पसादं करेदु। (४६) (थ)

मल। भद्र! भद्र! अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथाऽवस्थितम्। (द)

सिद्धा। णिसामेदु कुमारो, अहं क्खु अमच्चरक्खसेण इमं लेहं देइअ, चन्दउत्तसआसं पेसिदोह्मि। (४७) (ध)

मल। भद्र! वाचिकमिदानीं श्रोतुमिच्छामि।

सिद्धा। कुमार! संदिट्ठोह्मि अमच्चरक्खसेण, जहा—"एदे मम पिअवअस्सा पञ्च राआणो तुए सह पढमसमुप्पण्णसन्धाणा। जहा,—कुलूदाहिवो चित्तवम्मा, मलअणरवदाहिवो सिंहणादो, कस्मीरदेसणाहो पुक्खरक्खो, सिन्धुराओ सिन्धुसेणो, पारसीआहिवदी मेहक्खो त्ति। एत्थ ज्जेव पढमभणिदा तिण्णि राआणो मलअकेदुणो विसअं अहिलसन्ति इदरे दुवे कोसं हत्थिबलं च

(४४) यदार्य्य आज्ञापयति। आर्य्य! एष खलु ताड्यमानो विज्ञापयति, कुमारस्य स्वयमेव निवेदयामीति।

(४५) यत् कुमार आज्ञापयति।

(४६) अभयेन मे कुमारः प्रसादं करोतु।

(४७) निशामयतु कुमारः, अहं खलु अमात्यराक्षसेन, इमं लेखं दत्त्वा, चन्द्रगुप्तसकाशं प्रेषितोऽस्मि।

(थ) अभयेन अभयदानेन, प्रसादं अनुग्रहम्।

(द) भद्रभद्रेति सम्भ्रमे द्विर्भावः। परायत्तजनस्य पराधीनस्य अभयं भयाभाव एव विद्यते इति शेषः। यथाऽवस्थितं अवस्थितं प्रकृतं अनतिक्रम्य यथास्थितम्।

(ध) निशामयतु शृणोतु। चन्द्रगुप्तसकाशं चन्द्रगुप्तसमीपम्।

राच। भद्रे! मुहूर्त्तं तिष्ठ। कः कोऽत्र भोः?

पुरुष। [प्रविश्य।] आणवेदु अमच्चो। (५२)

राच। भद्र! उच्यतां शकटदासः, यथा परिधापिता वयम् आभरणं कुमारेण, तन्न युक्तम् इदानीम् अस्माभिः अनलङ्कृतैः कुमारदर्शनम् अनुभवितुम्, अतो यत् तद् अलङ्करणत्रयं क्रीतं तन्मध्याद् एकं दीयताम् इति। (ब)

पुरु। जं अमच्चो आणवेदि। [इति निष्क्रम्य पुनः प्रविश्य च]। अमच्च! इदं तं अलङ्करणं। (५३)

राच। [नाट्येन अवलोक्य आत्मानम् अलङ्कृत्य उत्थाय च]। भद्रे! राजकुलगामिनं मार्गम् आदेशय। (भ)

प्रती। एदु एदु अमच्चो। (५४)

राच। [स्वगतम्।] अधिकारपदं नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम्। (म) कुतः?—

भयं तावत् सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद् भवति हृदयेष्वेव निहितम्।
ततोऽध्यारूढानां पदमसुजनद्वेषजननं,
मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति॥ १२

(५२) आज्ञापयतु अमात्य।
(५३) यद् अमात्य आज्ञापयति। अमात्य! इदं तदलङ्करणम्।
(५४) एतु एतु अमात्य।

(ब) कुमारेण मलयकेतुना। आभरणं परिधापिता धारिता। न युक्तं न उचितं। इदानीमधुना। अनलङ्कृतैः निराभरणैः। अनुभवितुं कर्त्तुमित्यर्थः। क्रीतं मूल्यदानेनादत्तं। एकं अलङ्करणम्।

(भ) राजकुलगामिनं नृपतिभवनाभिमुखं। मार्गं पन्थानम्।

(म) अधिकार एव पदं वस्तु अधिकारपदं "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।" इत्यमरः। कार्यनियुक्तिरित्यर्थः परवशता इति यावत्। निर्दोषस्य दोषरहितस्यापि। महत् प्रचुरं। आशङ्कास्थानं भीत्यास्पदम्।

भयं तावदित्यादि। सेव्यात् उपजीव्यात् प्रभोः भयं भीतिः सेवकजनं परिवारकलोकं अभिनिविशते आक्रामति। ततः तदनन्तरं प्रत्यासन्नात् पार्श्ववर्त्तिनः सततसन्निहितात् अनुचरभ्रातृजनादित्यर्थः। भयं हृदयेषु मानसेषु निहितं स्थापितं प्रत्यादर्शितं भवति। ततः तदनन्तरं अध्यारूढानां समुन्नतपदानां पदं स्थानं अधिकार इति यावत्, असुजनानां

प्रती । [ परिक्रम्य । ] अमच्च ! अअं कुमालो चिट्ठदि, ता उपसप्पदु णं अमच्चो । ( ५५ )

राच । [ नाट्येन अवलोक्य । ] अये ! अयं कुमारः तिष्ठति ; य एषः,—

पादाग्रे दृशमवधाय निश्चलान्तीं
शून्यत्वादपरिगृहीततद्विशेषाम् ।
वक्त्रेन्दुं वहति करेण दुर्वहाणां
कार्य्याणां कृतमिव गौरवेण नम्रम् ॥ १२

[ उपसृत्य । ] विजयतां विजयतां कुमारः ।

मल । आर्य्य ! अभिवादये । इदमासनम् आस्यताम् । ( य )

राच । [ उपविशति । ]

मल । अमात्य ! चिरम् अदर्शनेन आर्य्यस्य वयम् उद्विग्नाः । (र)

राच । कुमार ! प्रयाणे प्रतिविधानम् अनुतिष्ठता मया कुमारादयमुपालम्भोऽधिगतः । ( ल )

मल । अमात्य ! प्रयाणे कथं प्रतिविहितमिति श्रोतुम् इच्छामि ।

राच । कुमार ! एवमादिष्टाः कुमारस्य अनुयायिनो ( व ) राजानः । [ प्रस्थातव्यमित्यादिश्लोकं पुनः पठति । ]

---

( ५५ ) अमात्य ! अयं कुमारस्तिष्ठति, तदुपसर्पतेनममात्यः ।

---

दुर्वहाणां वेपथनं विदेशीऽप्यार्द्रकं भवति । तीव्रकुमारस्य बहुप्रतिभाजां जनानां कार्य्य-कष्माचारिणामिव्यय: । मति बुद्धि. एतम गौरवस्यार्थ आर्थीभवनमिति यावत् अनुकूल हितकर कारयति मन्यते ॥ १२

पादाग्रे इत्यादि । य एष इति गद्यांशेन सहान्वयः । शून्यत्वात् चिन्ताविराडित्वात न गृहीत. परिलक्षित: तस्य पादस्य विशेष: वैचित्र्यं यया सा तां तथोक्ताम् । निश्चलान्तीं निस्पन्दां स्थिरां दृशं पादाग्रे निधाय सस्ताप्य दुर्वहाणां दुष्कराणां कार्य्याणां कर्त्तव्यानां गौरवेण भारातिशय्येन नम्र कृतमिव वक्त्रेन्दुं करेण हस्तेन वहति । उत्प्रेक्षालङ्कार: । स च उपमया संसृज्यते ॥ प्रहर्षिणी वृत्तम् ॥ १२

( य ) अभिवादये वन्दे । इदं पुरोवर्त्ति । आस्यतां उपविश्यताम् ।

( र ) अदर्शनेन दर्शनाभावेन । उद्विग्नाः अधृताः व्यग्रा इत्यर्थः ।

( ल ) प्रतिविधानं सम्यक् अनुष्ठानं । अनुतिष्ठता आचरता । अयं एव. पूर्वोक्त रूप । उपालम्भ: तिरस्कार. । अधिगत: प्राप्त ।

( व ) आदिष्टाः आज्ञप्ताः । अनुयायिन. अनुगामिनः ।

मल। [स्वगतम्।] विज्ञायते, कथं य एव मद्विनाशेन चन्द्रगुप्तम् आराधयितुम् उद्यताः, त एव मां परिवृण्वन्ति। (ङ) [प्रकाशम्।] आर्य्य। अस्ति कश्चिद् यः कुसुमपुरं प्रति गच्छति, (च) तत आगच्छति वा। (छ)

राक्ष। कुमार। अवसितम् इदानीं गतागतप्रयोजनम्। ननु पञ्चषैः अहोभिः वयमेव तत्र गन्तारः (ज)।

मल। [स्वगतम्।] विज्ञायते। [प्रकाशम्।] यदि एवं, तत् किमयम् आर्य्येण सलेखः पुरुषः कुसुमपुरं प्रस्थापितः (क)

राक्ष। [विलोक्य।] अये। सिद्धार्थक। भद्र। किमिदम्?

सिद्धा। [सबाष्पं लज्जां नाटयन्।] पसीददु पसीददु अमच्चो। अमच्च! अदिताडीअन्तेण मए ण पारिदं अमच्चस्स रहस्सं धारिदुं। (५६) (ख)

राक्ष। भद्र। कीदृशं तत् रहस्यमिति (ग) न खलु अवगच्छामि।

सिद्धा। णं विण्णवेमि, ताडीअन्तेण मए—" (५७) (घ) [इत्यर्द्धोक्ते सभयम् अधोमुखः तिष्ठति]।

---

(५६) प्रसीदतु प्रसीदतु अमात्यः। अमात्य। अतिताड्यमानेन मया न पारितम् अमात्यस्य रहस्यं धारयितुम्।

(५७) ननु विज्ञापयामि, ताड्यमानेन मया—"।

---

(ङ) विज्ञायते अवगम्यते। मद्विनाशेन मम निधनेन। आराधयितुं उपासितुं। उद्यताः उद्युक्ताः। ते एव कौलूताद्याः नरपतयः। मां परिवृण्वन्ति परिवृत्य तिष्ठन्ति। अतो मे मरणं सुनिश्चितमित्यर्थः।

(च) अस्ति कश्चित् विद्यते एवं कोऽपि।

(छ) ततः तस्मात् कुसुमपुरात्।

(ज) अवसितं परिसमाप्तं। गतस्य आगतस्य तयोः प्रयोजनं। पञ्चषैः पञ्च षट् वा परिमाणं येषां तैः पञ्चषैः पञ्चभिः षड्भिः वा दिनैः। तत्र कुसुमपुरे। गन्तारः गमनशीलाः भविष्यामः इति शेषः।

(क) सलेखः सपत्रः। प्रस्थापितः प्रेषितः।

(ख) अतिताड्यमानेन अत्यर्थं प्रहृियमाणेन। न पारितं न शक्तं। रहस्यं गोप्यं वस्तु धारयितुं निरोद्धुं।

(ग) कीदृशं किम्प्रकारं। तत् भवता कथितम्।

(घ) विज्ञापयामि निवेदयामि। इति अर्द्धोक्तिरस्य अपराधभयादिदम्।

मल। भागुरायण! स्वामिनः पुरस्ताद् भीतो लज्जितश्च नैष कथयिष्यति, अतः स्वयमेव आर्याय कथय। (ङ)

भागु। यद् आज्ञापयति कुमारः। अमात्य! एष कथयति, यथा—"अहम् अमात्यराक्षसेन लेखं दत्त्वा वाचिकञ्च सन्दिश्य, चन्द्रगुप्तसकाशं प्रेषितः" इति।

राक्ष। भद्र सिद्धार्थक! अपि सत्यम्?

सिद्धा। [लज्जां नाटयन्।] "............एव्वं अतिताड़ीअन्तेण मए णिवेदिदं। (५८)

राक्ष। कुमार! अनृतमेतत्। ताड्यमानः किं न ब्रूयात्? (च)

मल। भागुरायण! दर्शय लेखं, वाचिकञ्च अयमस्से स्वभृत्यः कथयिष्यति।

भागु। [लिखम् अवलोकयन्] "स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपि पुरुषविशेषम् अवगमयति" [इति वाचयति]।

राक्ष। कुमार! कुमार! शत्रोः प्रयोग एषः। (छ)

मल। लेखस्य अशून्यार्थम् (ज) आर्य्येण इदमाभरणम् अनुप्रेषितमिति, तत् कथं शत्रोः प्रयोग एष स्यात्? [इति आभरणं दर्शयति]।

राक्ष। [आभरणं निर्वर्ण्य।] कुमार! न एतन्मया अनुप्रेषितम्, एतद्धि कुमारेण मह्यं दत्तं, मया च परितोषस्थाने सिद्धार्थकाय दत्तम्।

भागु। भो अमात्य! ईदृशस्य आभरणविशेषस्य, विशेषतः कुमारेण स्वगात्रात् अवतार्य्य दत्तस्य, इयं परित्यागभूमिः (झ)

(५८) "...... एवं अतिताड्यमानेन मया निवेदितम्।

(ङ) स्वामिनः प्रभोः पुरस्तात् अग्रे। भीतः शङ्कितः। लज्जितः व्रीडः. जातलज्जः इत्यर्थः। एष सिद्धार्थकः। आर्य्याय आर्य्याय कथय वद।

(च) एतत् सिद्धार्थककथितं अनृतं असत्यं मिथ्या इत्यर्थः।

(छ) शत्रोः चाणक्यस्य एषः अयं प्रयोगः भेदकौशलम्।

(ज) अशून्यार्थे पूरणार्थे साक्षार्थे। उपायनादिशून्यस्य लेखस्य राजसन्निधौ प्रेरणानर्हत्वात्।

(झ) ईदृशस्य बहुमूल्यस्य। आभरणविशेषस्य विशिष्टालङ्कारस्य। ......

मल। वाचिकमपि आमतमात् सिद्धार्थकात् श्रोतव्यम् इति लिखितम्। आर्य्येण।

राक्ष। कुतो वाचिकम्? कस्य वा लेखः? अयमेव अस्मदीयो न भवति।

मल। इयं तर्हि कस्य मुद्रा?

राक्ष। कुमार! कपटमुद्रामपि उत्पादयितुं (ञ) शक्नुवन्ति धूर्त्ताः।

भागु। कुमार! सम्यगमात्यो विज्ञापयति। भद्र! सिद्धार्थक! केन अयं लिखितो लेखः?

सिद्धा। [ राक्षसमुखम् अवलोक्य तूष्णीम् अधोमुख तिष्ठति ]। (ञ)

भागु। अलं पुनः आत्मानं ताडयित्वा; कथय। (ट)

सिद्धा। अज्ज! सअडदासेण। (५९)

राक्ष। कुमार! यदि शकटदासेन लिखित, तर्हि मया एव लिखित.। (ठ)

मल। विजये! शकटदासं द्रष्टुम् इच्छामि।

प्रती। जं कुमालो आणवेदि। (६०)

---

(५९) आर्य्य! शकटदासेन।

(६०) यत् कुमार आज्ञापयति।

---

विशेषेण स्वगात्रात् स्वशरीरात् अवतार्य्य उन्मुच्य दत्तस्य अर्पितस्य इय एषा परित्यागभूमि वितरणास्पदं। नैतत् अल्पपारितोषिकत्वेन व्यवहर्त्तुं उचितं प्रीतिनिदर्शनत्वादतिमूल्य अलङ्कार इति भाव।

(ञ) कपटमुद्रा कृत्रिममुद्रा। उत्पादयितुं जनयितुं। धूर्त्ता प्रतारका।

(ञ) तूष्णीं नि शब्द, अव्ययमेतत् क्रियाविशेषणं। अधोमुख नतानन।

(ट) पुन भूय आत्मान स्वशरीरमित्यर्थ। अकथिते हि प्रकृतार्थे पुन प्रहार स्यात् स माभूत् प्रकृतार्थं वदेत्यर्थ।

(ठ) शकटदासस्य अतिविश्वासपात्रत्वादेवमुक्तं। न कथमपि शकटदासेन लिखित मित्यर्थः।

भाग। [स्वगतम्] न खलु अनिश्चितार्थम् आर्यचाणक्यप्रणिधयोऽभिधास्यन्ति, आगत्य शकटदासो वा, "सोऽयं लेख" इति प्रत्यभिज्ञाय पूर्ववृत्तं प्रकाशयेत्। एवं सति सन्दिहानो मलयकेतुः अस्मिन् प्रयोगे शयादरो भवेत्। [प्रकाशम्] कुमार! न कदाचिदपि शकटदासोऽमात्यराक्षसस्य अग्रतो "मया लिखित" इति प्रतिपत्स्यते, अतोऽन्यल्लिखितम् अस्य आनीयतां यतो वर्णसंवाद एव एतत् सर्वं विभावयिष्यति। (ङ)

मल। विजये! एवं क्रियताम्।

भाग। कुमार! मुद्रामपि आनयतु इयम्।

मल। उभयमपि आनीयताम्।

प्रती। जं कुमालो आणवेदि [इति निष्क्रम्य पुनः प्रविश्य।] कुमाल! इदं क्खु तं सअडदासेण सहत्थलिहिदं पत्तअं मुद्दा अ। (६१)

मल। [उभयमपि नाट्येन अवलोक्य।] आर्य्य! संवदन्ति अक्षराणि(ढ)

राक्ष। [स्वगतम्] संवदन्त्यक्षराणि, शकटदासस्तु मम मित्रम् इति च विसंवदन्ति अक्षराणि, (ण) तत् किं शकटदासेन लिखितम्?—

स्मृतं स्यात् पुत्रदाराणां विस्मृता स्वामिभक्तय।
चलेष्वर्थेषु लुब्धेन न यश स्वनपायिषु॥ १४

(६१) यत् कुमार आज्ञापयति। कुमार! इदं खलु तत् शकटदासेन स्वहस्तलिखितं पत्रं, मुद्रा च।

(ङ) प्रणिधयः गूढचराः। अभिधास्यन्ति वदिष्यन्ति। अयं स लेख, प्रयकारे यस्य इत्याशी वर्णित। प्रत्यभिज्ञाय अभिज्ञानेन ज्ञात्वा सम्यक परिचित्य। पूर्ववृत्तं पूर्वानुष्ठितव्यापारं। एवं सति प्रकाशिते सति। सन्दिहान जातसन्देह। शयादर आपक-र्षविश्वासवान्। प्रतिपत्स्यते स्वीकरिष्यति। वर्णसंवाद अक्षरसाम्य। विभावयिष्यति स्थिरीकरिष्यति। इयं प्रतीहारी।

(ढ) अक्षराणि वर्णा संवदन्ति सादृश्यं भजन्ते, तुल्यरूपाणि भवन्तीत्यर्थ।

(ण) विसंवदन्ति विरुध्यन्ते, विरुद्धभावं गमयन्तीत्यर्थ।

स्मृतं स्यादित्यादि। चलेषु चञ्चलेषु नितान्तनश्वरेषु अर्थेषु न अनपायिषु अविनश्वरेषु चिरस्थायिषु यश सु कीर्त्तिषु लुब्धेन लोलुपेन शकटदासेन इति शेषः। पुत्रदाराणां स्मृत चिन्तितं स्यात्। स्वामिभक्तय विस्मृता॥ १४

अथवा, कः सन्देहः?—

मुद्रा तस्य कराङ्गुलिप्रणयिनी, सिद्धार्थकस्तत्सुहृत्
तस्यैवापरलेख्यसूचितमिदं पत्रं प्रयोगाश्रयम्।
सुव्यक्तं शकटेन भेदपटुभिः सन्धाय सार्द्धं परैः
भर्त्तुः स्नेहपराङ्मुखेन कृपणं प्राणार्थिना चेष्टितम्॥ १५॥

मलय। आर्य्य! "अलङ्कारत्रयं श्रीमता यद् अनुप्रेषितं, तद् उपगतम्" इति आर्य्येण यल्लिखितं, तन्मध्याद् एकं किमिदम्? [निर्वर्ण्य आत्मगतम्] कथं तातेन धृतपूर्व्वम् इदम् आभरणम्? [प्रकाशम्] आर्य्य! कुतोऽयमलङ्कारः? (त)

राक्ष। वणिग्भ्यः क्रयादधिगतः। (थ)

मलय। विजये! अपि प्रत्यभिजानाति भवती भूषणमिदम्? (द)

प्रती। [निर्वर्ण्य सवाष्पम्] कुमाल! कहं ण पच्चभिजाणिस्सं? इमं क्खु सुगिहीदणामधेएण देएण पव्वदीसरेण धारिदपुव्वं। (१२) (ध)

---

(१२) कुमार! कथं न प्रत्यभिज्ञास्यामि? इदं खलु सुगृहीतनामधेयेन देवेन पर्व्वतेश्वरेण धारितपूर्व्वम्।

---

मुद्रा तस्येत्यादि। मुद्रा एतदङ्गुरीयकं। तस्य शकटदासस्य कराङ्गुलिप्रणयिनी हस्ताङ्गुलिस्थायिनी, सिद्धार्थकः तस्य शकटदासस्य सुहृत् मित्रं। प्रयोगः भेदनीतिप्रयोगः आश्रयः विषयो यस्य तत्प्रयोगाश्रयं उपजापपरं इदं पत्रं तस्यैव शकटदासस्यैव अपरलेख्यसूचितं अपरेण अन्येन लेख्येन प्रतिरूपलेख्येन सूचितं विज्ञापितं भवतीति शेषः। अतएव भर्त्तुः स्वामिनः स्नेहपराङ्मुखेन परित्यक्तानुरागेण प्राणार्थिना जीवनाभिलाषिणा शकटेन शकटदासेन भेदकुशलैः उपजापनिपुणैः परैः शत्रुभिः सार्द्धं सन्धाय सम्मील्य सन्धिं कृत्वा इत्यर्थः। सुव्यक्तं सुस्पष्टं कृपणं दीनं चेष्टितं व्यवसितम्॥ १५

(त) तातेन जनकेन। धृतपूर्व्वं पूर्व्वं धृतं। कुतः कस्मात् स्थानाद्धेतोः।

(थ) वणिग्भ्यः विक्रेतृभ्यः। अधिगतः प्राप्तः।

(द) भवती त्वं, प्रत्यभिजानाति परिचिनोति।

(ध) निर्वर्ण्य दृष्ट्वा, "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्।" इत्यमरः। सवाष्पं, सरोदनं। पर्व्वतेश्वरस्मरणात् इत्यर्थः। सुगृहीतनामधेयेन प्रातःस्मरणीयनाम्ना। देवेन प्रभुणा।

मल। [सवाष्पम्] हा तात!—

एतानि तानि तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण! भूषणानि।
यै: शोभितोऽसि, मुखचन्द्रकृतावभासो
नक्षत्रवानिव शरत्समयप्रदोषः॥ १६

राच। [स्वगतम्] कथं पर्वतेश्वरधृतपूर्वाणि इत्याह? [प्रकाशम्] व्यक्तम् एतान्यपि तेन चाणक्यप्रयुक्तेन वणिग्जनेन अस्मासु विक्रीतानि। (न)

मल। आर्य! तातेन धृतपूर्वाणाम् आभरणविशेषाणां विशेषतः चन्द्रगुप्तहस्तगतानां वणिग्भ्यः क्रयात् अधिगम इति, न युज्यते, (प) अथवा युज्यते एव एतत्—

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छतः।
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयम्॥ १७

राच। [आत्मगतम्] अहो! सुश्लिष्टः अभूद् एव प्रयोगः। (फ) कुतः?—

एतानितानीत्यादि। हे कुलभूषण वंशालङ्कार! भूषणवल्लभस्य अलङ्कारप्रियस्य तव गात्रोचितानि शिरः प्रभृत्यात् अशरीराय्यमानि एतानि इमानि तानि परिचितानि भूषणानि अलङ्करणानि। यैः भूषणैः मुखचन्द्रेण चन्द्रवन्मुखेन कृतः अवभासः दीप्तिर्यस्य सः मुखचन्द्रकृतावभासः, पक्षे, मुखे निशामुखे चन्द्रेण निशाकरेण कृतः विहितः अवभासः प्रस्फुरणं यस्य सः तथोक्तः, नक्षत्रवान् तारकासमन्वितः शरत्समयस्य शरत्कालस्य प्रदोषः सायं समय इव त्वं शोभितः विराजितः असि॥ उपमालङ्कारः। वसन्ततिलकं वृत्तम्॥ १६

(न) चाणक्यप्रयुक्तेन कौटिल्यप्रेरितेन।

(प) धृतपूर्वाणां पूर्वं धृतानां। आभरणविशेषाणां विशिष्टाभरणानां। चन्द्रगुप्तहस्तगतस्य अलङ्कारस्य विक्रयः कथं सम्भाव्यते, अतएव वणिग्भ्यः क्रयात् अधिगमः लाभः इत्यपि न युज्यते सङ्गच्छते।

चन्द्रगुप्तस्येत्यादि। क्रूरेण घातुकेन भवता त्वया, अधिकं बहुलं लाभं अर्थं इच्छतः अभिलषतः विक्रेतुः चन्द्रगुप्तस्य एतेषां आभरणानां वयं मूल्यं अर्घं "मूल्ये पूजाविधावर्घः" इत्यमरः। कल्पिताः कृताः। सर्वे हि प्रचुरतरलाभाय सततं यतन्ते चन्द्रगुप्तोऽपि तदर्थं यतमानः एतदाभरणविनिमयेन मम प्राणान् क्रीतवानित्यर्थः। अतः विक्रयो युज्यत एव। परिणामालङ्कारः॥ १७

(फ) एष चाणक्यप्रयुक्तः प्रयोगः छद्मप्रयोगः। सुश्लिष्टः सुदृढः।

राक्ष। [स्वगतम्] अयम् अपरो गण्डस्योपरि विस्फोटः। (र) [प्रकाशं कर्णौ पिधाय।] शान्तं पापं, शान्तं पापम्। नाहं विषकन्याम् आरोपितवान्, अपापोऽहं पर्वतेश्वरे।

मल। केन तर्हि व्यापादितः तातः?

राक्ष। दैवमत्र प्रष्टव्यम्। (ल)

मल। [सक्रोधम्।] दैवमत्र प्रष्टव्यं, न क्षपणको जीवसिद्धिः।

राक्ष। [स्वगतम्।] कथं जीवसिद्धिरपि चाणक्यप्रणिधिः! हन्त! हृदयमपि मे रिपुभिः स्वीकृतम्। (व)

मल। [सक्रोधम्।] भासुरक! आज्ञाप्यतां शिखरसेनः सेनापतिः, ये एतेन राक्षसेन सह सौहार्दमुत्पाद्य अस्मच्छरीराभिद्रोहेण (श) चन्द्रगुप्तम् आराधयितुकामाः पञ्च राजानः; तद्यथा, कौलूतः चित्रवर्म्मा, मलयनरपतिः सिंहनादः, काश्मीरः पुष्कराक्षः, सिन्धुराजः सुषेणः, पारसीकाधिराजो मेघाख्य इति। तत्र तेषां मध्ये, ये त्रयः प्रधानतमाः प्रथमे मदीयां भूमिं कामयन्ते, ते गम्भीरश्वभ्रम् उपनीय पांशुभिः पूर्य्यन्ताम्, (ष) इतरौ तु द्वौ हस्तिबलकामौ हस्तिनैव घात्येतामिति।

पुरुष। जं कुमारो आणवेदि। (६२) [इति निष्क्रान्तः]

---

(६२) यत् कुमार आज्ञापयति।

मल। [सक्रोधम्।] राक्षस! राक्षस! नाहं विश्रम्भघाती राक्षसो, मलयकेतुः खल्वहम्, तद् गच्छ, समाश्रीयतां सर्वात्मना (घ) चन्द्रगुप्त इति,—

विष्णुगुप्तश्च मौर्य्यश्च समम्प्यागतौ त्वया।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नय॥ २२

भाग। कुमार! अलं कालहरणेन! शीघ्रमेव कुसुमपुरोपरोधाय (ङ) प्रतिष्ठाप्यन्ताम् अस्मद्बलानि,—

गौडीनां लोध्रधूलीपरिमलबहुलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य।
पांशुव्यूहा बलानां तुरगखुरपुटक्षोदलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु॥ २३

[इति सपरिजनो निष्क्रान्तो मलयकेतुः]।

राक्ष। [सावेगम्।] हा धिक् कष्टम्॥ तेऽपि हताः तपस्विनश्चित्रवर्मादयः॥ तत् कथं सुहृद्विनाशाय राक्षसश्चेष्टते, न रिपुविनाशाय? तत् किमिदानीं करवाणि मन्दभाग्यः?—

(घ) विश्रम्भघाती विश्वासघातकः। राक्षसः कौणपः। समाश्रीयतां समवलम्ब्यतां सर्वात्मना सर्वतोभावेन।

विष्णुगुप्तश्चेत्यादि। दुर्नय दुर्नीतिपरायण त्रिवर्गं धर्मार्थकामं इव त्वया भवता सम सह आगतौ विष्णुगुप्तं चाणक्यं मौर्यं चन्द्रगुप्तञ्च अहं उन्मूलयितुं नाशयितुं ईशः समर्थः। उपमालङ्कारः॥ २२

(ङ) कुसुमपुरोपरोधाय कुसुमपुरमुपरोद्धुम्।

गौडीनामित्यादि। बलानां सैन्यानां तुरगखुरैः अश्वखुरपुटैः ये क्षोदाः चूर्णानि तैर्लब्धः प्राप्तः आत्मलाभः जन्म यैः ते तुरगखुरपुटक्षोदलब्धात्मलाभाः पांशूनां रजसां व्यूहाः पांशुव्यूहाः रजःसङ्घाः गौडीनां गौडयोषितां लोध्रस्य तन्नाम्नस्तरुकुसुमस्य धूलि परिमलेन परागगन्धेन बहुलान् परिव्याप्तान् लोध्रधूलिपरिमलबहुलान् लोध्रकुसुमपराग परिमलव्याप्तान् कपोलान् गण्डभागान् धूम्रयन्तः धूम्रवर्णान् कुर्वन्तः, भ्रमरकुलस्य रुचिरिव रुक् यस्य तस्य भ्रमरकुलरुचः अलिनीलस्य, कुञ्चितस्य वक्राकारस्य अलकस्य चूर्णकुन्तलस्य कृष्णिमानं श्यामत्वं क्लिश्नन्तः नाशयन्तः, गजानां हस्तिनां मदसलिलैः दानवारिभिः छिन्नानि मूलानि येषां ते गजमदसलिलच्छिन्नमूलाः गजमदजलैरार्द्रत्वात् भूपृष्ठादुदुत्थापिताः सन्तः शत्रूणां उत्तमाङ्गे शिरसि पतन्तु॥ अत्र तद्गुणालङ्कारः स चोपमया सङ्कीर्यते। स्रग्धरा वृत्तम्॥ २३

लेखोऽयं न ममेति, नोत्तरमिदं, मुद्रा मदीया यतः
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत् कथम्?।
मौर्य्ये भूषणविक्रयं नरपतौ को नाम सम्भावयेत्?
तस्मात् सम्प्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम् ॥ १८

मल। एतद् आर्य्यं पृच्छामि।

राक्ष। य आर्य्यः तं पृच्छ; (ब), वयम् इदानीम् अनार्य्याः

मल।—

मौर्य्योऽसौ स्वामिपुत्रः, परिचरणपरो मित्रपुत्रस्तवाहं
दाता सोऽर्थस्य तुभ्यं, स्वमतमनुगतस्त्वन्तु मह्यं ददासि।
दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र ते, स्वाम्यमत्र,
स्वार्थे कस्मिन् समीहा पुनरधिकतरे त्वामनार्य्यं करोति? ॥ १९

राक्ष। कुमार! एवम् अयुक्तव्याहारिणा भवता एव मे निर्णयो दत्तः। कुतः?—[“मौर्य्योऽसौ स्वामिपुत्र” इति पूर्वपठितश्लोकार्धेन पठति]। (भ)

मल। [लेखमलङ्करणस्थगिकाञ्च निर्दिश्य।] इदमिदानीं किम्?

लेखोऽयमित्यादि। अयं लेखः पत्रं न मम इति एवमुत्तरं न सङ्गच्छते यतः यस्मात् इयं मुद्रा मदीया मन्नामाङ्किता। शकटेन शकटदासेन सौहार्दं बन्धुत्वं खण्डितं विनष्टं इत्येतत् वाक्यं कथं केन प्रकारेण श्रद्धेयं श्रद्धायोग्यं विश्वसनीयमित्यर्थः। मौर्य्ये नरपतौ राजनि भूषणविक्रयं कः पुमान् सम्भावयेत् प्रतीयात्। तस्मात् कारणात् अत्र विषये मे मम सम्प्रतिपत्तिः स्वीकार एव वरं मनाक् प्रियं ग्राम्यं अविश्वासहेतुत्वात् ग्राम्यं उत्तरं न वरं इति शेषः ॥ १८

(ब) य इति। आर्य्यः तद्गुणयुक्तः सत्पुरुषः इत्यर्थः। आर्य्यलक्षणं यथा—“कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। तिष्ठति प्रकृताचारे तमार्य्यं सम्प्रचक्षते।” इति।

मौर्य्योऽसौ इत्यादि। असौ मौर्य्यः चन्द्रगुप्तः तव स्वामिपुत्रः प्रभुतनयः, अहं तव परिचरणपरः सेवापरायणः मित्रपुत्रः सुहृत्सुतः। स मौर्य्यस्तुभ्यं अर्थस्य वेतनरूपधनस्य दाता प्रदाता, त्वं स्वमतं स्वाभिप्रायं अनुगतः सन् स्वेच्छानुसारेण इत्यर्थः मह्यं ददासि धनमानप्रभृत्यादिकमिति शेषः। तत्र मौर्य्ये सचिवपदं अमात्यपदं सत्कारः सम्मानः पूर्वो यस्य तत् सत्कारपूर्वं सम्मानपुरःसरं दास्यं दासत्वं, अत्र मयि स्वाम्यं स्वाधीनत्वात् प्रभुत्वं भवेदिति शेषः ननु भोः! पुनः भूयः अधिकतरे अतिशयिते कस्मिन् गरीयसि स्वार्थे स्वाभिलषितविषये समीहा लालसा त्वां भवन्तं अनार्य्यं अनार्य्योचितं करोति। अतः परं किमभिलषितं सुखित्वं तव एवं सर्वसम्प्राप्तिजाता इत्यर्थः ॥ स्रग्धरावृत्तम् ॥ १९

(भ) अयुक्तव्याहारिणा अयुक्तम् असङ्गतं व्याहरति वदति इति तेन अयथाभाषिणा। निर्णयः निश्चयः। पुरुष कदा मदधीन वैपरीत्येन परिवर्त्तनमेतद्। यथा—

राक्ष। [ सवाष्पम् ] विधेर्विलसितमिदं, ( म ) कुतः ?—

भृत्यत्वे परिभावधामनि सति स्नेहात् प्रभूणां सतां,
पुत्रेभ्यः कृतवेदिनां कृतधियां येषामभिन्ना वयम् ।
ते लोकस्य परीक्षकाः, क्षितिभृतः पापेन येन क्षताः
तस्येदं विपुलं विधेर्विलसितं, पुंसां प्रयत्नच्छिदः ॥ २०

मल। [ सक्रोधम् ] कथम् अद्यापि निह्नूयते ( य ) विधेर्विलसित-मिदं, न ममेति ? अनार्य !—

कन्यां तीव्रविषप्रयोगविषमां कृत्वा, कृतघ्न ! त्वया
विस्रम्भप्रवणस्तदा मम पिता नीतः कथाशेषताम् ।
सम्प्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपोः
प्रारब्धाः प्रणयाय मांसवदहो ! विक्रेतुमेते वयम् ॥ २१

मौर्योऽसौ स्वामिपुत्रः परिचरणपरो मित्रपुत्रो मम त्वम्,
दाता सोऽर्थस्य मह्यं स्वकमनुगतोऽहन्तु तुभ्यं ददामि ।
दास्यं सत्कारपूर्वं मम तु सचिवपदे भव मे स्वाम्यमत्र
स्वार्थे कश्चित् समीहा पुनरधिकतरे मामनार्थं करोति ॥ इति

( म ) विधेः दैवस्य विलसितं क्रीडा खेलनमिति यावत् ।

भृत्यत्वे इत्यादि । परिभावस्य तिरस्कारस्य धामनि परिभावधामनि अनादरास्पदे भृत्यत्वे सति विद्यमाने, कृतधियां परिणतमतीनां कृतवेदिनां उपकारविदां कृतज्ञानामित्यर्थः । सतां साधूनां येषां प्रभूणां नन्दानां स्नेहात् प्रेम्णा वयं पुत्रेभ्यः अभिन्नाः अपृथग्भूताः पुत्रनिर्विशेषा इत्यर्थः अभवाम इति शेषः । लोकस्य परीक्षकाः विचारकाः ते क्षितिभृतः राजानः पापेन दुरात्मना येन दैवेन क्षताः विनष्टाः । पुंसां पुरुषाणां प्रयत्नच्छिदः उद्यम-नाशकस्य पुरुषकारहारिणः इत्यर्थः तस्य विधेः दैवस्य इदं एतत् विपुलं प्रचुरं नानाकारं विलसितं विस्फुरणं खेलनमिति यावत् भवतीति शेषः । अत्र अभिन्नाइत्युक्तेर्भेदेऽप्यभेदकथनात् अतिशयोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २०

( य ) अद्यापि एवं सनाथीकृतेऽपि निह्नूयते अपलप्यते । अनार्य असाधो ।

कन्यामित्यादि । हे कृतघ्न अकृतज्ञ । त्वया तीव्रं तीक्ष्णं यत् विषं गरलं तस्य प्रयोग तद्वत् विषमा भीषणा तां तीव्रविषप्रयोगविषमां अत्युग्रगरलप्रयोगभीषणां प्राणघातिनी-मित्यर्थः । कन्यां कृत्वा विधाय, विस्रम्भप्रवणः विश्वासपरः अतिविश्वस्तः मम पिता, कथा नाम एव शेषं यस्य सः कथाशेषः तस्य भावः तां कथाशेषतां नाममात्रावशेषतां मृत्यु इत्यर्थं नीतः प्रापितः । सम्प्रति इदानीं रिपोः विपक्षस्य मन्त्राधिकारे मन्त्रिपदे आहित गौरवेण लब्धसम्मानेन भवता त्वया प्रणयाय प्रणयं प्रीतिं रचितुं एते वयं मांसवत् पललमिव विक्रेतुं प्रारब्धाः उपक्रान्ताः । अहो इति खेदसूचकं अव्ययम् । उपमालङ्कारः ॥ २१

किं गच्छामि तपोवनम् ? न तपसा शाम्येत् सवैरं मनः,
किं भर्तृननुयामि ! जीवति रिपौ, स्त्रीणामियं योग्यता ।
किंवा खड्गसखः पतास्म्यरिबले ! नेदं न युक्तं भवेत् ?
चेतश्चन्दनदासमोचरभसं रुन्ध्यात् कृतघ्नं न चेत् ॥ २४

[ इति निष्क्रान्ताः सर्वे । ]

किं गच्छामीत्यादि । अहं किं तपोवनं गच्छामि, तपश्चर्य्यार्थे वनं प्रविशामि, नैतद् युक्तं, यतः, सवैरं प्रतिहिंसाकुलं मनः तपसा तपश्चरणेन न शाम्येत्, शान्तिं लभेत । रिपौ विपक्षे जीवति विद्यमानजीवने सति भर्तृन् प्रभून् मृतनन्दानित्यर्थः अनुयामि अनुगच्छामि मरणेनेति शेषः । किं । नैतत् युक्तं, यतः, इयं चाण्डत्या स्त्रीणां योग्यता, तदनुसरणभावेन तास्विव सम्भवति, न मम समर्थस्येन्द्रियवाहिनः पुरुषाभिमानिनः ॥ किंवा अथवा खड्गसखः असिमात्रसहायः सन्नपाथ मार्गेऽस्मीत्यर्थः । अरिबले शत्रुसैन्यमध्ये पतामि प्रविशामि, इदमरिबले पतनं युक्तं न भवेत् इति न किन्तु युक्तं भवेदेव । चन्दनदासस्य परम मित्रस्य वणिजः मोक्षे बन्धनागारात् मोचने रभसः वेगो यस्य तत् चन्दनदासमोचरभसं चन्दनदासपरित्राणव्याकुलं "एतदेव कृतघ्नं विस्मृतप्रभूपकारं चेतः मनः" चेत् यदि न रुन्ध्यात् आमिति शेषः । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २४

इति मुद्राराक्षसव्याख्यायां शिष्यबोधिनीसमाख्यायां
पञ्चमोऽङ्कः समाप्तः ।

---

# षष्ठोऽङ्कः।

[ ततः प्रविशति अलङ्कृतः सहर्षः सिद्धार्थकः ]।

सिद्धा। जअदि जलदणीलो केसवो केसिघादी
जअदि सुअणदिट्ठीचन्दमा चन्दउत्तो।
जअदि जअणसज्जं जा अकाऊण सेण्णं,
पडिहदपडिवक्खा अज्जचाणक्कणीदी ॥ १ (१)

ता जाव चिरस्स कालस्स पिअवअस्सं सुसिद्धत्थअं पेक्खामि। [ परिक्रम्य अवलोक्य च। ] अअं उण पिअवअस्सओ सुसिद्धत्थओ इदो ज्जेव आअच्छदि; ता जाव उवसप्पामि। (२) (क)

[ ततः प्रविशति सुसिद्धार्थकः ]।

सुसिद्धा।
सन्तावेन्ता आवाणेसुं मज्जसवेसुं समावेन्ता।
हिअअच्छिआ अवि विहवा, विरहे मित्ताणं दुम्मणा अन्ति ॥ २

---

(१) जयति जलदनीलः केशवः केशिघाती,
जयति सुजनदृष्टिचन्द्रमाश्चन्द्रगुप्तः।
जयति जयनसज्यं याऽकृत्वा च सैन्यं
प्रतिहतप्रतिपक्षा आर्य्यचाणक्यनीतिः।

(२) तद्, यावत् चिरस्य कालस्य प्रियवयस्यं सुसिद्धार्थकं पश्यामि। अयं पुनः प्रियवयस्यः सुसिद्धार्थक इत एवागच्छति तद् यावदुपसर्पामि।

---

जयति जलदनील इत्यादि। जलानि ददातीति जलदः मेघः तद्वत् नीलः जलदनीलः नवनीरदनीलवर्णः, केशिघाती केशिनाशनः केशवः विष्णुर्जयति सर्व्वोत्कर्षेण वर्त्तते। सुजनानां विनीतप्रकृतीभूतानां दृष्टीनां लोचनानां चन्द्रमाः चन्द्रवदाह्लादजनक इत्यर्थः। चन्द्रगुप्तः महाराजमौर्य्यो जयति। या नीतिः जयत्यनेन विपक्षं इति जयनं युद्धोपकरणं अस्त्रादिकं तेन सज्यं सज्जितं सैन्यं बलं अकृत्वा अविधाय, प्रतिहतः दूरीकृतः प्रतिपक्षः शत्रुपक्षो यया सा प्रतिहतप्रतिपक्षा दूरीकृतशत्रुपक्षा आर्य्यचाणक्यस्य नीतिः सामादिप्रयोगः जयति, सर्व्वोपरि विराजते। अत्र विभावनालङ्कारः। मालिनीवृत्तं। ननमयययुतेयं मालिनी भोगिलोकैः। इति लक्षणात् ॥ १

(क) इत एव अस्यां दिशि एव। उपसर्पामि उपगतो भवामि।

सन्तापयन्त इत्यादि। मित्राणां प्रियसुहृदां विरहे वियोगे विच्छेदे इत्यर्थः। हृदय-

त्ति। तदो तस्स तं णिवेदिअ, एव्वं अणुभूदपात्थिवप्पसादो, अहं पिअवअस्सं पेक्खिदुं तुह गेहं चलिदोम्हि। (६) (च)

समिद्धा। वअस्स! जदि मए एदं सुणिदव्वं भोदि, ता मंपि सुणावेहि, किं तं पिअं पिअदंसणस्स चन्दसिरिणो णिवेदिदं त्ति। (७)

सिद्धा। पिअवअस्स! तुह वि किं असुणिदव्वं अत्थि? ता णिसामेहि। अत्थि दाव, अज्जचाणक्कणीदिमोहिदमदिणा मलअकेदुहदएण णिराकरिअ रक्खसं, हदा चित्तवम्मप्पमुहा पहाणा पंच पात्थिवा; तदो असमिक्खकारी एसो दुराआरो त्ति कदुअ, उज्झिअ मलयकेदुकडअभूमिं, कुसलतया भअविलोलसेसतणू किदपरिवारेसु सकं सकं विसअं सभअ अभिप्पत्थिदेसु, पात्थिवेसु, णिव्विसहिअएसु सअलसामन्तेसु भद्दभटपुरुदत्तडिङ्गरातवलउत्तराअसेणभागुराअण रोहिदक्खविजअवम्मप्पमुहेहिं संजमिदो मलअकेदू। (८) (छ)

---

(६) प्रसीदतु प्रसीदतु प्रियवयस्य। अद्य खलु इत एव आर्यचाणक्येन आज्ञप्तः, यथा—"सिद्धार्थक! गच्छ, इदं प्रियं वृत्तान्तं प्रियदर्शनस्य देवस्य चन्द्रश्रियः निवेदय" इति। ततस्तस्य तन्निवेद्य, एवमनुभूतपार्थिवप्रसादोऽहं प्रियवयस्यं प्रेक्षितुं तव गेहं चलितोऽस्मि।

(७) वयस्य। यदि मयेदं श्रोतव्यं भवति, तन्मामपि श्रावय, किं तत् प्रियं प्रियदर्शनस्य चन्द्रश्रियः निवेदितमिति।

(८) प्रियवयस्य। तवापि किमश्रोतव्यमस्ति? तन्निशामय,—अस्ति तावत्, आर्यचाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निराकृत्य राक्षसं, हता चित्रवर्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः। ततोऽसमीक्ष्यकारी एष दुराचार इति कृत्वा, उज्झित्वा मलयकेतुकटकभूमिं कुशलतया भयविलोलशेषतनुकृतपरिवारेषु, स्वकं स्वकं विषयं सभयमभिप्रस्थितेषु पार्थिवेषु, निर्विषण्णहृदयेषु सकलसामन्तेषु भद्रभट पुरुदत्त डिङ्गरात बलगुप्त राजसेन भागुरायण रोहिताक्ष विजयवर्मप्रमुखैः संयमितो मलयकेतुः।

---

(च) अनुभूतः पार्थिवस्य प्रसादो येन सः अनुभूतपार्थिवप्रसादः लब्धराजानुग्रहः। चलितः गन्तुं प्रवृत्तः।

(छ) आर्यचाणक्यस्य नीत्या मत्या मोहिता व्यामोहिता मतिः बुद्धिर्यस्य तेन आर्यचाणक्यनीतिमोहितमतिना। निराकृत्य प्रत्याख्याय। समीक्ष्य विविच्य करोतीति समीक्ष्यकारी न तथा भवति असमीक्ष्यकारी हठकारी। दुराचारः पापकर्मा। सभय

समिद्धा। वअस्स ! भद्दभटप्पमुहा किल देवस्स चन्दसिरिणो अवरत्ता मलअकेदुं समासिदा त्ति लोए मन्तीअदि। ता किं णिमित्तं एदं कुकविणाडअस्स विअ अण्णं मुहे अण्णं णिव्वहणे त्ति ? (९) (ज)

सिद्धा। वअस्स ! सुणु दाव, देवगदीए विअ असुणिदगदीए णमो अज्जचाणक्कणीदीए। (१०)

समिद्धा। वअस्स ! तदो तदो ? (११)

सिद्धा। वअस्स ! तदो प्पहुदि, सारसाहणसमुदएण इदो णिक्कमिअ, अज्जचाणक्केण पडिवण्णं अराअलोअं असेसराअबलं। (१२) (झ)

समिद्धा। वअस्स ! कहिं ? (१३)

सिद्धा। वअस्स ! जहिं एदे,—(१४)

---

(९) वयस्य ! भद्रभटप्रमुखा किल देवस्य चन्द्रश्रियः अपरक्ता मलयकेतुं समाश्रिता इति लोके मन्त्र्यते। तत् [illegible] निमित्तमेतत्, कुकविनाटकस्येव अन्यत् मुखे अन्यत् निर्वहणे इति ?

(१०) वयस्य ! शृणु तावत्, दैवगत्यै इव अश्रुतगत्यै नम आर्यचाणक्यनीत्यै।

(११) वयस्य ! ततस्ततः ?

(१२) वयस्य ! ततः प्रभृति, सारसाधनसमुदयेन इतो निष्क्रम्य, आर्यचाणक्येन प्रतिपन्नमराजलोकमशेषराजबलम्।

(१३) वयस्य ! कुत्र ?

(१४) वयस्य ! यत्रैते,—

---

क्षितौ कटकभूमौ शिबिरस्थाने। कुशलतया नैपुण्येन। उज्झित्वा परित्यज्य। भय विलोलानि भयकातराणि यानि सैन्यानि तैः पलायमानैरित्यर्थः समूलम् अस्वीकृत परि सार अनुचरवर्गो यैस्तेषु भयविलोलसैन्यतनुकृतविभावेषु। स्वकं निजं विषयं देशं पालयत्सु राजसु। निर्विशङ्कदर्पेषु दुःखितविशेषु। सकलसामन्तेषु समसमरदम्भमानेषु। समाश्रित यह।

(ज) अपरक्ता विरक्ता। मन्त्र्यते कथ्यते। कुकविः अशिक्षितकविः तत्कृतं नाटकं तस्य कुकविनाटकस्य। मुखे आरम्भे मुखसन्धौ। निर्वहणे निर्वहणसन्धौ उपसंहारे। आदौ अन्यर्थकोपाख्यानं कृत्वा पश्चात् तदैव वर्ण्यं सर्वथा अनुचितं दीर्घापेक्षितत्वं वर्तते।

(झ) ततः प्रभृति ततः आरभ्य। इतः अस्मात् नगरात्। सारं श्रेष्ठं यत् साधनं

अदिसअगुरुएण दाणदप्पेण दन्ती,
सजलजलदलीला उव्वहन्तो मदन्ति ।
कसपहरभएण जादकम्पा तुरन्ता
गहिदजअणसद्दा संपदन्ते तुरंगा ॥ २ (१५)

सुसिद्ध । वअस्स ! सव्वं दाव चिट्ठदु ; तहा सव्वलोअस्स पच्चक्खं उज्झिआहिआरो भविअ, कहं अमच्चचाणक्को पुणो वि तं ज्जेव मन्तिपदं आरूढो ? (१६) (अ)

सिद्ध । वअस्स ! अदिमुद्धो दाणीं सि तुमं, जो अमच्चरक्खसेण अणवगाहिदपुव्वं अमच्चचाणक्कबुद्धिं अवगाहिदुं (ट) इच्छसि ? (१७)

सुसिद्ध । वअस्स ! अध अमच्चरक्खसो दाणीं कहिं ? (१८)

सिद्ध । वअस्स ! सो क्खु तस्सिं पलअकोलाहले वट्टमाणे,

---

( १५ ) अतिशयगुरुकेण दानदर्पेण दन्तिनः
सजलजलदलीलामुद्वहन्तो मदन्ति ।
कशाप्रहारभयेन जातकम्पास्त्वरयन्तः
गृहीतजयशब्दाः सम्पतन्ति तुरङ्गाः ॥

( १६ ) वयस्य ! सर्वं तावत् तिष्ठतु । तथा सर्वलोकस्य प्रत्यक्षमुज्झिताधिकारी, भूत्वा कथमार्यचाणक्यः पुनरपि तदेव मन्त्रिपदमारूढः ?

( १७ ) वयस्य ! अतिमुग्ध इदानीमसि त्वं, य अमात्यराक्षसेन अनवगाहितपूर्वामार्यचाणक्यबुद्धिमवगाहितुमिच्छसि ?

( १८ ) वयस्य ! अथ अमात्यराक्षस इदानीं कुत्र ?

---

सैन्यादिकं युद्धोपकरणं तस्य समुदयो यत्र तेन सारसाधनसमुदयेन प्रतिपदं प्राप्तं अधिकतमिति यावत् ।, अराजलीलं नरपतिसूर्यं । अधीश्वराजवत् समस्तपसैन्यम् ।

अतिशयगुरुकेणेत्यादि । दन्तिनः हस्तिनः अतिशयगुरुकेण अतिमहता दानदर्पेण मदगर्वेण सजलजलदानां वारिविशिष्टानां वारिदानां लीलां क्रियां "लीला विलासक्रिययो" इत्यमरः । उद्वहन्तः धारयन्तः मदन्ति हृष्यन्ति "हृ'षितं करिगर्जितं" इत्यमरः । तुरङ्गाः अश्वाः, कशया वेत्रेण प्रहारः आघातः तस्मात् भयं तेन कशाप्रहारभयेन जातकम्पाः अतएव त्वरयन्तः आरोहिणः त्वरान्वितान् कुर्वन्तः, गृहीतः अपगतः जयशब्दः जयघोषणा यैः ते गृहीतजयशब्दाः सन्तः सम्पतन्ति समन्तात् गच्छन्ति ॥ २

( अ ) सर्वलोकस्य प्रत्यक्षं सकललोकसमक्षं उज्झितः परित्यक्तः अधिकारो येन, स उज्झिताधिकारः परित्यक्तसचिवत्वः इत्यर्थः ।

मलअकेदुकडआदो णिक्कमिअ, उन्दुरणामहेएण चरेण अणुसरन्तो इमं ज्जेव कुसुमउरं आअदो त्ति अज्जचाणक्कस्स (ट) णिवेदिदं। (१९)

सुसिद्ध। वअस्स। तहा णाम अमच्चरक्खसो णन्दरज्जप्पच्चाणअणे किदव्ववसाओ णिक्कमिअ, सम्पदं अकिदत्थो (ठ) पुणो वि कहं इमं ज्जेव कुसुमउरं आअदो? (२०)

सिद्ध। वअस्स! तक्केमि, चन्दणदासस्स सिणेहेण त्ति। (२१)

सुसिद्ध। वअस्स। सच्चं चन्दणदासस्स सिणेहेण त्ति? अध चन्दणदासस्स मोक्खं पेक्खसि? (२२)

सिद्ध। वअस्स! कुदो से अधण्णस्स मोक्खो? सो क्खु सम्पदं अज्जचाणक्कस्स आणत्तीए दुवेहिं पि अम्हेहिं वज्झट्ठाणं पवेसिअ वावादइदव्वो (२३) (ड)

सुसिद्ध। [सक्रोधम्।] वअस्स! किं अज्जचाणक्कस्स घादअजणो अण्णो णत्थि, जेण अम्हे ईदिसे णिसंसे (ढ) कम्मे णिउज्जीअदि? (२४)

---

(१९) वयस्य! स खलु तस्मिन् प्रलयकोलाहले वर्त्तमाने, मलयकेतुकटकात् निष्क्रम्य उन्दुरनामधेयेन चरेणानुस्रियमाण इदमेव कुसुमपुरमागत, इति आर्य्यचाणक्यस्य निवेदितम्।

(२०) वयस्य! तथा नाम अमात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य साम्प्रतमकृतार्थः पुनरपि कथमिदमेव कुसुमपुरमागत?

(२१) वयस्य! तर्कयामि, चन्दनदासस्य स्नेहेनेति।

(२२) वयस्य! सत्यं चन्दनदासस्य स्नेहेनेति? अथ चन्दनदासस्य मोक्षं प्रेक्षसे?

(२३) वयस्य! कुतोऽस्य अधन्यस्य मोक्ष? स खलु साम्प्रतमार्य्यचाणक्यस्य आज्ञया द्वाभ्यामपि आवाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः।

(२४) वयस्य! किमार्य्यचाणक्यस्य घातकजनोऽन्यो नास्ति, येन आवाम् ईदृशे नृशंसे कर्म्मणि नियुज्यावहे?

---

(ट) पूर्व्वं न अवगृहीता अवगुह्या अनवगृहीतपूर्व्वा। अवगाहितुं प्रवेष्टुं।

(ठ) नन्दराज्यस्य प्रत्यानयने प्रत्याहारे। कृतव्यवसाय विहितसङ्कल्पः। अकृतार्थ व्यर्थप्रयासः।

(ड) अधन्यस्य अकृतपुण्यस्य दुरात्मन इत्यर्थः। मोक्ष बन्धनमोचनं। आज्ञया आदेशेन। वध्यस्थानं मारणभूमिं श्मशानमित्यर्थः। व्यापादयितव्य हन्तव्यः।

(ढ) घातकजन हन्तृलोक। नृशंसे अतिदारुणे हिंसात्मके इत्यर्थः।

सिद्धा। वअस्स! को जीवलोए णिव्वुदिकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि; (ण) ता एहि, चण्डालवेसधारिणो भविअ, चन्दणदासं वज्झट्ठाणं णेम्ह। (२५)

[उभौ निष्क्रान्तौ]।

प्रवेशकः। (त)

[ततः प्रविशति रज्जुहस्तः पुरुषः]।

पुरु।—

छग्गुणसंजोअदिढा उवाअपरिवाडिघडिदपासमुही।
चाणक्कणीदिरज्जू रिउसंजमणउज्जुआ जअदि॥ ४

[परिक्रम्यावलोक्य च]। एसो सो अज्जचाणक्कस्स उन्दुरएण चरेण कधिदो पदेसो, जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो। [निर्वर्ण्य] कहं एसो क्खु अमच्चरक्खसो किदावगुण्ठणो इदो ज्जेव आअच्छदि॥ ता जाव इमेहिं जिण्णुज्जाणपादवेहिं ओवारिदसरीरो पेक्खामि, कहिं आसणपरिग्गहं करेदि- (थ) (२६) [इति परिक्रम्य तथा स्थितः]।

---

(२५) वयस्य! को जीवलोके निर्वृतिकाम आर्यचाणक्यस्य आज्ञां प्रतिकूलयति? तदेहि, चण्डालवेशधारिणौ भूत्वा, चन्दनदासं वध्यस्थानं नयाव।

(२६) षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी।
चाणक्यनीतिरज्जू रिपुसंयमनऋजुका जयति॥

एष स आर्यचाणक्यस्य उन्दुरकेण चरेण कथितः प्रदेशः, यत्र मया आर्यचाणक्याज्ञया अमात्यराक्षसः प्रेक्षितव्यः। कथमेष खलु अमात्यराक्षसः कृतावगुण्ठन इत एवागच्छति। तद् यावदेभिर्जीर्णोद्यानपादपैः अपवारितशरीरः प्रेक्षे कुत्रासनपरिग्रहं करोतीति।

---

(ण) जीवलोके संसारे। निर्वृतिकामः निर्वाणाभिलाषी। प्रतिकूलयति उल्लङ्घयति। चण्डालवेशधारिणौ परिहितघातकवेशौ।

(त) प्रवेशकः प्राग्व्याख्यातः।

षड्गुणसंयोगदृढेत्यादि। षड्भिः गुणैः, रज्जुभिः सन्ध्यादिभिश्च संयोगेन एकत्रावस्थानेन संघटनेन दृढा अच्छेद्या च। उपायानां कौशलानां सामादीनाञ्च परिपाट्या प्रयोगेण घटितं सम्पन्नं पाशरूपं मुखं यस्याः सा। रिपूणां शत्रूणां संयमने ऋजुका सरला चाणक्यनीतिरज्जुः जयति सर्वोत्कर्षेण वर्त्तते। अत्र श्लेषमूलको रूपकालङ्कारः स्फुटः॥ ४

(थ) कृतावगुण्ठनः वस्त्राच्छन्नमस्तक इत्यर्थः। इतः अस्यां दिशि। जीर्णैः विशीर्णैः उद्यानपादपैः उपवनवृक्षैः। अपवारितशरीरः आच्छादितविग्रहः। प्रेक्षे अवलोकयामि। आसनस्य परिग्रहः स्वीकारः। कुत्र उपविशतीत्यर्थः।

[ ततः प्रविशति यथानिर्दिष्टः सपरिजनो राक्षसः ]।

राक्ष। [ सबाष्पम्। ] कष्टं भो: कष्टम् !—

उत्सन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः।
श्राप्तैरप्यनवाप्तपौरुषफलैः कार्य्यस्य धूरुज्झिता,
किं कुर्वन्त्वथवोत्तमाङ्गरहितैर्नागैश्चिरं स्थीयते ॥ ५

अपिच,—

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता च्छिद्रेण श्रीर्वृषलमविनीतेव वृषली।
स्थिरीभूता चास्मिन् किमिव करवाम स्थिरमपि,
प्रयातुं नो येषां विफलयति दैवं द्विषदिव ॥ ६

मया हि,—

देवे गते दिवमतद्विधमृत्युयोग्ये,
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः।

उत्सन्नाश्रयकातरेत्यादि। उत्सन्नः विलुप्तः आश्रयः अधिष्ठानं यस्याः सा उत्सन्नाश्रया अतएव कातरा दीना, श्रीः राजलक्ष्मीः कुलटा इव पुंश्चली इव गोत्रान्तरं वंशान्तरं गता प्राप्ता। गतस्य पूर्व्वावलम्बितमार्गस्य अनुगतिः अनुगमनं यासां ताः गतानुगतिकाः एकपथावलम्बिन्यः इत्यर्थः। त्यक्तानुरागाः विकृतायत्ताः प्रजाः प्रकृतयः तां श्रियं एव अनुगताः। चन्द्रगुप्तमाश्रिताः इत्यर्थः। अनवाप्तं अलब्धं पौरुषफलं यैः तैः अनवाप्तपौरुषफलैः विफलप्रयासैरित्यर्थः। आप्तैः अस्माभिरपि कार्य्यस्य अधिकृतकर्म्मणः, धूः भारः उज्झिता परित्यक्ता। अथवा किं कुर्वन्तु अनुजीविनः ते आप्ता इति शेषः। नेतृविहीनानां तेषां का गतिरित्यर्थः। तथाहि उत्तमाङ्गरहितैः मस्तकविहीनैः नागैः सर्पैः गजैर्वा अप्रतिविधेयसामर्थ्यवद्भिरपि चिरं दीर्घकालं व्याप्य स्थीयते अवस्थानमात्रं क्रियते न तु किञ्चित् प्रतिविधीयते इत्यर्थः। अप्रस्तुतप्रशंसालङ्कारः। शार्दूलविक्रीडितं वृत्तं ॥ ५

पतिं त्यक्त्वेत्यादि। श्रीः राजलक्ष्मीः अविनीता उद्धता दुश्चरित्रा वृषली शूद्रा शूद्ररमणी इव उच्चैरभिजनं उन्नतवंशसम्भूतं भुवनपतिं जगत्पालकं देवं प्रभुं पतिं नन्दमित्यर्थः, त्यक्त्वा छिद्रेण छलेन वृषलं मौर्य्यं गता आश्रिता, अस्मिन् मौर्य्ये स्थिरीभूता च चिरस्थायिनी च जाता इति शेषः। अथ किं करवाम वयमिति शेषः। येषां नः अस्माकं प्रयातुं प्राप्तुं स्थिरं निश्चितं अपि प्रयत्नमिति शेषः। दैवं दुरदृष्टं कर्त्तृ द्विषत् इव शत्रुः इव विफलयति विफलं व्यर्थं करोति। अत्र उपमालङ्कारः उत्प्रेक्षया संसृज्यते। शिखरिणीवृत्तम् ॥ ६

तस्मिन् हते तनयमस्य, तथाप्यसिद्धि,
दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥ ७

अथवा । विवेकशून्यता म्लेच्छस्य मलयकेतोः (द)। कुतः ?—

यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिनः,
तेषां वैरिभिरच्युतः कथमसौ सन्धास्यते राक्षसः ?
इत्थं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं,
दैवेनोपहतस्य बुद्धिरथवा पूर्वं विपर्य्यस्यति ॥ ८

तद् इदानीमपि तावद् अरातिहस्तगतो विनश्येद् राक्षसो, न तु चन्द्रगुप्तेन सह सन्धिं कुर्य्यादिति, अथवा मम कामम् असत्यसन्ध इति, वरम् अयशः, न पुनः शत्रुवचनपरिभूतिः । (ध) [समन्तात् अवलोक्य सास्रम्]। एतास्ता देवस्य पादचङ्क्रमणपरिचय पवित्रीकृतरथ्याः कुसुमपुरोपकण्ठभूमयः । (न)

देवे गते इत्यादि । तद्विधस्य नन्दौर्यौर्य्यो न भवतीति अतद्विधमौर्य्ययोः तस्मिन् शाक्यशोचनीयमरणो देवे दिवं स्वर्गं गते याते सति तं शैलेश्वरं पर्वतकं अधिकृत्य प्रयत्नः प्रयासः कृतः । तथापि न भवति पदेन सम्बन्धः । तस्मिन् शैलेश्वरे हते चाणक्येन विषकन्यया घातिते अस्य तनयं पुत्रं मलयकेतुं अधिकृत्य प्रयत्नः कृतः तथापि असिद्धिः असाफल्यं विफलतेति यावत् । हि यतः दैवं अदृष्टं नन्दकुलशत्रुः नन्दवंशरिपुः असौ विप्रः चाणक्यः न, न नन्दकुलशत्रुर्भवति । अत्र दैवस्य कर्त्तृत्वं विप्रस्तु निमित्तमात्रं तथा निन्दात्मकमिति भावः । अत्र परिसंख्यालङ्कारः, वसन्ततिलकं वृत्तम् ॥ ७

( द ) विवेकेन शून्यः विवेकशून्यः तस्य भावः निर्विवेकत्वं विचारवैमुख्यं इति यावत् ।

यो नष्टानपीत्यादि । यः राक्षसः जीवनाशं जीवं जीवनं समूलं नाशयित्वा नष्टान् समूलं विलुप्तान् स्वामिनः नन्दान् अधुनापि शुश्रूषते सेवते असौ अच्युतः अविभ्रष्टः शरीरेण स्थितः राक्षसः तेषां नन्दानां वैरिभिः शत्रुभिः सह कथं सन्धास्यते संश्लेष्यते मिलितो भविष्यतीत्यर्थः । वस्तुविवेके विषयनिर्वाचने मूढा मुग्धा कलुषिता मतिर्यस्य तेन वस्तुविवेकमूढमतिना सदसद्विचारासमर्थेन । म्लेच्छेन मलयकेतुना इत्थं एतादृशं न आलोचितं विचारितं ; अथवा दैवेन प्रतिकूलादृष्टेन उपहतस्य आहतस्य जनस्येति शेषः । बुद्धिः विवक्षयापि पूर्वं विपत्तेः प्रागेव विपर्य्यस्यति विपरीता भवति । अर्थान्तरन्यासालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८

( ध ) अरातिहस्तगतः रिपुकरतलवर्त्ती शत्रुवशीभूत इत्यर्थः । विनश्येत् म्रियेत । अथवा मिथ्याभूता सन्धा प्रतिज्ञा यस्य सः असत्यसन्धः वितथप्रतिज्ञः । इति अयशः अकीर्त्तिः वरं मनाक् प्रियं । शत्रुवचनेन परिभूतिः पराभवः न वरमित्यर्थः ।

( न ) एताः इमाः ताः पूर्वानुभूताः । पादचङ्क्रमणस्य पदविक्षेपस्य परिचयेन अभ्या

इह हि,—

शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देवैः,
देवेनाकारि चित्रं प्रजवितपुरगं वाणमोक्षचलेषु ।
यस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्य,
सम्प्रत्यालोकयमाना कुसुमपुरभुवो भूयसा दुःखयन्ति ॥ ८

तत् क्व खलु गच्छामि मन्दभाग्यः ? (प) [ विलोक्य ] भवतु, दृष्टमतज्जीर्णोद्यानम्, अत्र प्रविश्य कुतश्चिच्चन्दनदासस्य वृत्तान्तम् उपलप्स्ये (फ) । [ परिक्रम्य स्वगतम् ] अहो ॥ अलक्षितोपनिपाता पुरुषाणां समविषमदशाविभागपरिणतयो (ब) भवन्ति । कुतः ?—

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः शनैः,
यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः ।
भूयः सम्प्रति सोऽहमेव नगरे तत्रैव वन्ध्यश्रमो,
जीर्णोद्यानकमेष तस्कर इव त्रासाद् विशामि द्रुतम् ॥ १०

मन मविमोहता पूता रथ्या राजमार्गा यासां ता पादपङ्कजमपरिचयपरिमोहतरथ्य पुनः पुनर्गमनमपि वलमाना । कुसुमपुरस्य उपवनभूमयः समीपवासभूमयः यतन्ते इति अर्थ ।

शार्ङ्गेति । अत्र देवो भूपदेवो, शार्ङ्गज्यायाः धनुर्गुणस्य आकृष्टाः आकर्षणम् तदुना मुक्तः परित्यक्तः अतएव प्रशिथिलः श्लथीभूतः कविकायाः खलीनस्य प्रग्रहः रश्मिः येन तेन तथोक्तेन देवेन नन्देन चलेषु चपलेषु वेध्येषु इति अर्थः प्रजवितः सुखाभिमुखात् द्रुतं धावितः तुरगः यस्मिन् तत् प्रजविततुरगं चित्रं आश्चर्यं यथा तथा बाणमोक्षः शरक्षेपः अकारि कृतः । अस्याः उद्यानराजौ उपवनभूमौ इत्यर्थः इति प्रसिद्धे राजभिः सह स्थितं अवस्थानम् । इह अत्र ते राजभिः सह कथितं आलापनं । सम्प्रति अधुना तैर्विना ताम् स्थलं कुसुमपुरभुवः आलोक्यमाना दृश्यमाना सत्यः भवेति शेषः । भूयसा बाहुल्येन दुःखं यान्ति दुःखयन्ति कुर्वन्ति दुःखं जनयन्तीत्यर्थः । अत्र समासोक्तिरलङ्कारः । स्रग्धरावृत्तम् ॥ ९

( प ) क्व कुत्र । मन्दभाग्यः दुर्भाग्यः ।

( फ ) दृष्टम् अवलोकितम् । जीर्णोद्यानं पुरातनोपवनमित्यर्थः । अत्र उद्याने । कुतश्चित् कस्मादपि । वृत्तान्तं वार्ता । उपलप्स्ये ज्ञास्यामि ।

( ब ) अलक्षितः अनवलोकितः उपनिपातः यासां ता अलक्षितोपनिपाताः अतर्कितागमाः । समाः अनुकूलाः विषमाः प्रतिकूलाः ये दशाविभागाः विभिन्नावस्थाः इत्यर्थः तेषां परिणतयः परिणामाः ।

पौरैरित्यादि । यः अहं पुरा पूर्वसमये पौरैः पुरवासिभिः जनैः धीरैः निःशब्दं यथा तथा अङ्गुलिभिः नवेन्दुवत् नवोदितचन्द्र इव निर्दिश्यमानः प्रदर्श्यमानः राज्ञां नरपतीनां

अथवा, येषां प्रसादादिदम् आसीत् ते एव न सन्ति । [ नाट्येन प्रविश्य विलोक्य च । ] अहो ! जीर्णोद्यानस्य न अभिरमणीयता । अत्र हि,—

विपर्यस्तं सौधं कुलमिव महारम्भरचनं,
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः ।
फलैर्हीना वृक्षा विगुणविधियोगादिव नयाः,
तृणैश्छन्ना भूमिर्मतिरिव कुनीत्या ह्यविदुषः ॥ ११

अपिच अत्र,—

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां,
रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया,
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥ १२

शकटे इव परिवर्तित राजा इव पुरात् नगरात् निरगमं निर्गतवान् । स एव एष अहं सम्प्रति इदानीं तस्मिन्नेव नगरे कुसुमपुरे अध्याश्रम देवप्रातिकूल्यात् विफलप्रयत्न अप्रयोजक इत्यर्थः । तस्कर इव चौर इव त्रासात् भयात्, द्रुतं शीघ्रं अधैर्यरक्षितभावेनेत्यर्थः । भूय पुनरपि जीर्णोद्यानं विशामि प्रविशामि । अत्र उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तं ॥ १०

विपर्यस्तमित्यादि । महान् आरम्भो यस्याः सा महारम्भा विपुलायोजना, रचना निर्मितिर्यस्य तत् महारम्भरचनं महाडम्बरविनिर्मितं सौधं राजभवनं पक्षे महारम्भरचन महोत्साहेन विहितसदनुष्ठानं कुलं वंश इव विपर्यस्तं विपरीतं विनष्टमित्यर्थः । सुहृद मित्रस्य नाशेन विच्छेदेन साधोः सज्जनस्य हृदयं चित्तमिव सरः कासारः शुष्कं निर्जलं जात सन्तापयुक्तञ्च । विगुणस्य प्रतिकूलस्य विधेः दैवस्य योगात् सङ्गमात् दुर्दैववशादित्यर्थः नया नीतिप्रयोगा इव वृक्षाः तरवः फलैः शस्यैः लाभैश्च हीनाः विरहिताः । अविदुषः प्रयोगकौशल अजानतः अज्ञानशीलस्य कुनीत्या दुर्नयेन मतिर्बुद्धिरिव भूमिः आधारभूता भू तृणैः घासैश्छन्ना आच्छादिता परिव्याप्ता इत्यर्थः । अत्र उपमालङ्कारः । शिखरिणीवृत्तं ॥ ११

क्षताङ्गानामित्यादि । तीक्ष्णैः निशितैः उदग्रैः उन्नतैः परशुभिः कुठारैः क्षताङ्गानां कर्तिताश्रयवानां, रुजा छेदनव्यथया, अविरतं यथा तथा कपोतानां पारावतानां उपरुदितैः क्रन्दनैः कूजन्तीनां वदतीनां इव क्षितिरुहां वृक्षाणां शाखानां विटपानां, परिचितानां चिरनिवासत्वात् कृतपरिचयानां वृक्षाणां । परिक्लेशेन व्रणजनितातिदुःखेन या कृपा करुणा तया हेतुभूतया श्वसन्तः दीर्घनिश्वासं परित्यजन्तः फणिनः सर्पाः स्वेषां ये निर्मोकाः त्वचः तेषां खण्डैः स्वनिर्मोकच्छेदैः परित्यक्तकञ्चुकपत्रखण्डैः व्रणक्षत निबध्नन्ति आच्छादयन्ति इव ॥ उत्प्रेक्षालङ्कारः । शिखरिणीवृत्तम् ॥ १२

श्रान्तं शरीरपरिशोषमुपाश्रयन्ती,
कीटक्षतिस्रुतिभिरस्रमिवोद्वमन्ती ।
छायावियोगमलिना व्यसने निमग्ना,
वृक्षी श्मशानमुपगन्तुमिव प्रवृत्ता ॥ १३

तद्यावत् अस्मिन् विषमदशापरिणामसुलभे भग्नाश्मशिलातले मुहूर्त्तम् उपविशामि । [उपविश्य आकर्ण्य च ।] अये ! किमयम् आकस्मिकः शङ्खपटहविमिश्रो नान्दीनादः श्रूयते ? (भ) य एष,—

प्रकुर्वन् श्रोतॄणां श्रुतिपथमसारं गुरुतया,
बहुत्वात् प्रासादे सर्पादि परिपीतोज्जृम्भित इव ।
असौ नान्दीनादः पटुपटहशङ्खध्वनिमहान्,
दिशां दैर्घ्यं द्रष्टुं प्रसरति सकौतूहल इव ॥ १४

[विचिन्त्य] आ, ज्ञातम्, एष हि मलयकेतुसंयमनकृत (म) राज

श्रान्तं शरीर इत्यादि । वृक्षी तरुः श्रान्तशरीरस्य, शरीराभ्यन्तरस्य परिशोषं अतिशोषणं जलसेचनाभावात् उपाश्रयन्ती अवलम्बमाना, तथा कीटक्षतिस्रुतिभिः कीटकृतक्षतात् स्रवितैः तरुस्रवैः अस्रं बाष्पं उद्वमन्ती मुञ्चन्ती तथा छायायाः अनातपस्य वियोगेन विरहेण मलिना विवर्णा छायामूलकशोभाभावात् हततेजस्का इत्यर्थः । अतएव व्यसने विपदि मग्ना अवगाढा सती श्मशानं पितृवनं प्रेतभूमिमित्यर्थः । उपगन्तुं प्रयातुं प्रवृत्ता उद्युक्ता इव, मरणार्थं श्मशानगमने समुद्युक्ता इत्यर्थः । उत्प्रेक्षालङ्कारः । वसन्ततिलकं वृत्तम् ॥ १३

(भ) विषम दारुण अप्रतिविधेय इत्यर्थः या दशा अवस्था तस्याः परिणामः परिपाकः तत्र सुलभे सुप्रापे अनायासलभ्ये इत्यर्थः । भग्नाश्मशिलातले खण्डितप्रस्तरतले । आकस्मिकः सहसा उत्पन्नः । शङ्खेन पटहेन च समस्य तत्शब्देन इत्यर्थः, विमिश्रः संपृक्तः । नान्दीनादः आभ्युदयिकशब्दः आनन्दकोलाहलः ।

प्रकुर्वन् इत्यादि । गुरुतया गौरवेण इदानीमित्यर्थः श्रोतॄणां श्रवणकर्तॄणां श्रुतिपथं श्रवणविवरं नास्ति सारः बलं यत्र तं असारं दुर्बलं शब्दान्तरश्रवणे हीनसामर्थ्यं तेनैव पूर्णत्वं न ददाति भावः । प्रकुर्वन् जनयन्, तथा बहुत्वात् बाहुल्यात् प्रासादे राजभवने सर्पादितत्प्रचारात् च दौ परिपीतं पयात् उज्जृम्भितः परिपीतोज्जृम्भितः शब्दोद्गारः इव पटूनां तीव्रस्वराविशां पटहशङ्खानां ध्वनिभिः शब्दैः महान् प्रचुरः नान्दीनादः आनन्दकोलाहलः, सकौतूहलः सकौतुकः इव दिशां आशानां दैर्घ्यं आयामं द्रष्टुं प्रसरति इव सर्वतः प्रचलति इव । अत्र उत्प्रेक्षालङ्कारः शिखरिणीवृत्तम् ॥ १४

(म) एष नान्दीनादः । मलयकेतोः संयमनेन बन्धनेन कृतः भणितम् ।

कुलस्य । [ स्वर्दोषं नाटयन् ] (य) मौर्य्यकुलस्य । अधिकपरितोषं पिशुनयति (र) [ सवाष्पम् ] कष्टं भोः । कष्टम् ॥—

श्रावितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः ।
अनुभावयितुं मन्ये, यत्र सम्प्रति मां विधिः ॥ १५

पुरु । आसीणो अअं । ता जाव अज्जचाणक्कस्स आणत्तिं सम्पादेमि । (२७) [ राक्षसमपश्यन्निव तस्यादूरतो रज्जुपाशेन कण्ठम् बध्नाति ] ।

राक्ष । [ विलोक्य स्वगतम् ] अये ! कथम् अयमात्मानम् उद्बध्नाति ॥ नूनमयम् अहमिव दुःखितः तपस्वी । भवतु, पृच्छामि एनम् (ल) [ उपसृत्य प्रकाशम् ] भद्र भद्र ! किम् इदम् अनुष्ठीयते ?

पुरु । [ सास्रम् ] अज्ज । जं पिअवअस्सविणासदुक्खिदो अह्मारिसो मन्दभाओ जणो अणुचिट्ठदि । (२८) (व)

राक्ष । [ स्वगतम् ] प्रथममेव तावत् मया ज्ञातं, नूनम् अहमिव अयमार्त्तः तपस्वीति । भवतु, पृच्छामि एनम् । [ प्रकाशम् ] भद्र । व्यसनसब्रह्मचारिन् ! यदि न गुह्यं, न अतिभारिकं वा, तत् श्रोतुम् इच्छामि, किं ते प्राणपरित्यागकारणम् । (श)

---

( २७ ) आसीनोऽयम् । तद् यावदार्य्यचाणक्यस्य आज्ञप्तिं सम्पादयामि ।

( २८ ) आर्य्य । यत् प्रियवयस्यविनाशदुःखित अस्मादृशो मन्दभाग्यो जनोऽनुतिष्ठति ।

---

( य ) राक्षसेन असमनस्कतया मौर्य्ये राजशब्दः प्रयुक्तः, तत्र अनिच्छाप्रयोगात् अस्फुटता तया सह वर्त्तमानं यथा तथा ।

( र ) अधिकपरितोषं विपुलानन्दं । पिशुनयति सूचयति ।

श्रावितोऽस्मीत्यादि । शत्रोर्विपक्षस्य मौर्य्यस्य श्रियं ऐश्वर्य्यं प्रभुत्वं श्रावितः अस्मि । अभिनीय अत्र समानीय दर्शितः अहं विधात्रा इति शेषः । मन्ये सम्प्रति इदानीं मां अनुभावयितुं, विपक्षविभूतिदर्शनजनितं दुःखमिति शेषः । विधिर्दैवस्य यत्र आयत्ते वर्त्तते इति शेषः । उत्प्रेक्षालङ्कारः ॥ १५

( ल ) उद्बध्नाति उद्बन्धं करोति पाशबद्धं कृत्वा हिनस्तीत्यर्थः । नूनं निश्चितं । अयम् एषः । तपस्वी वराकः । दीनः पुरुषः ।

( व ) प्रियवयस्यस्य प्रियसुहृदः विनाशेन दुःखितः क्लिष्टः । मन्दभाग्यः दुर्भाग्यः । यत् कार्य्यं अनुतिष्ठति, तदेव अनुष्ठीयते इत्यर्थः ।

( श ) आर्त्तः कातरः । सह ब्रह्म वेदाध्ययनार्थं व्रतं चरति अनुतिष्ठति इति स ब्रह्मचारी सहाध्यायी । व्यसने विपदि सब्रह्मचारी, ततस्सम्बोधने । हे समानदुःख, एकविध

पुरु। [निरूप्य] अज्ज! ण रहस्सं ण वा अतिगुरुअं, किन्तु ण सक्कणोमि पिअवअस्सविणासदुक्खिदहिअओ एत्तिअमेत्तम्पि मरणस्स कालहरणं कादुं। (२९) (प)

राक्ष। [निश्वस्य आत्मगतम्] कष्टम्, एतेषु सुहृद्व्यसनेषु परवद् उदासीनाः प्रत्यादिश्यामहे वयमनेन। [प्रकाशम्] भद्र! यदि न रहस्यं, न अतिगुरुकं वा, तत् पुनः श्रोतुम् इच्छामि, कथ्यतां का गतिः दुःखस्येति? (फ)

पुरु। अहो!! णिबन्धो अज्जस्स, का गदी एसो णिवेदेमि, अत्थि एत्थ णअरे मणिआरसेट्ठी जिष्णुदासो णाम। (३०) (ब)

राक्ष। [स्वगतम्] अस्ति जिष्णुदासः चन्दनदासस्य परं मित्रम्। [प्रकाशम्] किं तस्य?

पुरु। सो मम पिअवअस्सो। (३१)

राक्ष। [सहर्षम् आत्मगतम्] अये! प्रियवयस्य इत्याह। अत्यन्त-

---

(२९) आर्य। न रहस्यं, न वा अतिगुरुकं, किन्तु न शक्नोमि प्रियवयस्य विनाशदुःखितहृदय एतावन्मात्रमपि मरणस्य कालहरणं कर्तुम्।

(३०) अहो! निर्बन्धः आर्यस्य, का गतिः एष निवेदयामि, अस्ति अत्र नगरे मणिकारश्रेष्ठी जिष्णुदासो नाम।

(३१) स मम प्रियवयस्यः।

---

व्यसन, इत्यर्थः। गुह्यं गोप्यं। अतिभारिकं अत्यन्तगुरुकं। ते तव प्राणपरित्यागकारणं जीवनविसर्जनहेतु।

(प) रहसि भवं रहस्यं गोपनीयं। प्रियवयस्यविनाशेन अभिमतबन्धुविच्छेदेन दुःखितं हृदयं यस्य स प्रियवयस्यविनाशदुःखितहृदयः प्रियसुहृद्वियोगक्लिष्टचित्तः। एतावती मात्रा यस्य तत् एतावन्मात्रं स्वल्पपरिमितं कालहरणं समयक्षेपं विलम्बमित्यर्थः।

(फ) सुहृद्व्यसनेषु मित्राणां विपत्कालेषु। परवत् परेण तुल्यं उदासीनाः अनुद्युक्ताः अप्रतीकारार्थिनः वयं अनेन आगन्तुकेन पुरुषेण वा प्रत्यादिश्यामहे निराक्रियामहे तिरस्क्रियामहे इति यावत्। कथ्यतामुच्यतां दुःखस्य कोऽयस्य का किम्विधा गतिः उपस्थिता तद्विवरणमित्यर्थः।

(ब) निर्बन्ध आग्रहः। का गतिः क उपायः। निवेदयामि विज्ञापयामि मणिकारश्रेष्ठी रत्नव्यवसायी वणिक्।

अविक्लिष्टसम्बन्ध (क) इव ॥ आख्यति चन्दनदासस्य वृत्तान्तम् ।

[सशङ्कम्] भद्र ! किं तस्य ?

पुरु। [सवाष्पम्] सम्पदं सो दीणजणदिण्णविहवो जलणं पविसिदुकामो णअरादो णिक्कन्तो। ता अहं पि जाव तस्स पिअवअस्सस्स असुणिदव्वं ण सुणोमि, ताव अत्ताणअं उब्बन्धिअ वावादेमि त्ति इमं जिण्णुज्जाणं आअदो। (२२) (ख)

राक्ष। भद्र ! अथ अग्निप्रवेशे तव सुहृदः को हेतुः ?—
किमौषधपथातिगैरुपहतो महाव्याधिभिः । (ग)

पुरु। अज्ज ! णहि णहि। (२३)

राक्ष। किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा ? । (घ)

पुरु। अज्ज ! सन्तं पावं, सन्तं पावं। चन्दउत्तस्स जणवदेसु अणिसंसा पडिवत्ती। (२४) (ङ)

---

(२२) साम्प्रतं स दीनजनदत्तविभवो ज्वलनं प्रवेष्टुकामो नगरात् निष्क्रान्तः। तद् अहमपि यावत् तस्य प्रियवयस्यस्य अश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति इमं जीर्णोद्यानमागतः।

(२३) आर्य ! नहि नहि।

(२४) आर्य ! शान्तं पापं शान्तं पापम्। चन्द्रगुप्तस्य जनपदेषु अनृशंसा प्रतिपत्तिः।

---

(क) अक्लिष्टं यथा तथा सन्निकृष्टः प्रत्यासन्नः सम्बन्धो यस्य सः अत्यन्तसान्निध्यसम्बन्धः अत्यासन्नसम्बन्धः।

(ख) दीनजनेभ्यः दरिद्रलोकेभ्यः दत्तः समर्पितः विभवो येन सः दीनजनदत्तविभवः दारिद्र्यसमर्पितधनः। निष्क्रान्तः बहिर्गतः। ज्वलनं वह्निं प्रवेष्टुकामः आत्मप्रवेशमभिलषन्नित्यर्थः। अश्रोतव्यं श्रवणायोग्यं मरणमित्यर्थः। उद्बध्य ऊर्द्ध्वलम्बिना पाशेन बद्ध्वा। व्यापादयामि मारयामि।

(ग) औषधस्य पन्थानं अतिगच्छन्ति ये ते औषधपथातिगाः औषधपथमतिक्रान्ताः अप्रतिकार्या इत्यर्थः महाव्याधिभिः महारोगैः उपहतः आक्रान्तः किम्।

(घ) अग्निविषकल्पया वह्निविषाभ्यां ईषन्न्यूनया तत्तुल्यया इत्यर्थः। नरपतेर्भूपालस्य क्रुधा कोपेन निरस्तः किम् दूरीकृतः कथितः।

(ङ) जनपदेषु नगरेषु चन्द्रगुप्तस्य मौर्यस्य अनृशंसा अघातुका कल्याणकारी इत्यर्थः, प्रतिपत्तिः आचारः।

पुरु। [ निरूप्य ] अज्ज ! ण रहस्सं ण वा अतिगुरुअं, किन्तु ण सक्कणोमि पिअवअस्सविणासदुक्खिदहिअओ एत्तिअमेत्तम्पि मरणस्स कालहरणं कादुं। (२८) (प)

राक्ष। [ निश्वस्य आत्मगतम् ] कष्टम्, एतेषु सुहृद्व्यसनेषु परवद् उदासीनाः प्रत्यादिश्यामहे वयमनेन। [ प्रकाशम् ] भद्र ! यदि न रहस्य, न अतिगुरुकं वा, तत् पुनः श्रोतुम् इच्छामि, कथ्यतां का गतिः दुःखस्येति ? (स)

पुरु। अहो ॥ णिबन्धो अज्जस्स, का गदी एसो णिवेदेमि, अत्थि एत्थ णअरे मणिआरसेट्ठी जिण्हुदासो णाम। (३०) (ह)

राक्ष। [ स्वगतम् ] अस्ति जिष्णुदासः चन्दनदासस्य परं मित्रम्। [ प्रकाशम् ] किं तस्य ?

पुरु। सो मम पिअवअस्सो। (३१)

राक्ष। [ सहर्षम् आत्मगतम् ] अये। प्रियवयस्य इत्याह। अत्यन्त-

---

(२८) आर्य्य ! न रहस्य, न वा अतिगुरुक, किन्तु न शक्नोमि प्रियवयस्य विनाश-दुःखितहृदय एतावन्मात्रमपि मरणस्य कालहरणं कर्त्तुम्।

(३०) अहो ! निर्बन्ध आर्य्यस्य, का गति एष निवेदयामि अस्ति अत्र नगरे मणि-कारश्रेष्ठी जिष्णुदासो नाम।

(३१) स मम प्रियवयस्य।

---

व्यसनं, इत्यर्थः। गुह्यं गोप्यं। अतिभारिकं अत्यन्तगुरुकं। तं तव प्राणपरित्यागकारणं श्रोतुमविसर्जनहेतु।

(प) रहसि भवं रहस्यं गोपनीयं। प्रियवयस्यविनाशेन अभिमतबन्धुविच्छेदेन दुःखितं हृदयं यस्य स प्रियवयस्यविनाशदुःखितहृदयः प्रियसुहृद्वियोगक्लिष्टचित्त। एतावती मात्रा यस्य तत् एतावन्मात्रं स्वल्पपरिमितं कालहरणं समयक्षेपं विलम्बमित्यर्थः।

(स) सुहृद्व्यसनेषु मित्राणां विपत्कालेषु। परवत् परेण तुल्यं उदासीना अनुद्युक्ता अप्रतीकारार्थिनः वयं अनेन आत्मीयेन पुरुषेण वा प्रत्यादिश्यामहे निराक्रियामहे तिरस्क्रियामहे इति यावत्। कथ्यतामुच्यतां दुःखस्य क्लेशस्य का किंविधा गतिः उपस्थिति तद्विवरणमित्यर्थः।

(ह) निर्बन्ध आग्रह। का गति क उपाय। निवेदयामि विज्ञापयामि मणिकारश्रेष्ठी रत्नव्यवसायी वणिक्।

पुरु। अत्थि; जाणादि अज्जो, एत्थ णअरे मणिआरसेट्ठी चन्दणदासो णाम ? (३९)

राक्ष। [सविषादम् आत्मगतम्] एतत् तदपावृतमस्मद्विनाशशोकाप्रकाशद्वारं दैवेन। हृदय! स्थिरीभव। किमपि ते कष्टतरम् आकर्णनीयम्। [प्रकाशम्।] भद्र! श्रूयते मित्रवत्सलः स साधुः (ट) किं तस्य ?

पुरु। सो एदस्स जिण्णुदासस्स पिअवअस्सो होदि। (४०)

राक्ष। [स्वगतम्] अयमभ्यर्णः शोकवज्रपातो हृदयस्य। [प्रकाशम्] ततस्ततः ?

पुरु। तदो जिण्णुदासेण पिअवअस्ससिणेहसरिसं अज्ज विण्णत्तो चन्दउत्तो। (४१) (ड)

राक्ष। कथय किमिति ?

पुरु। देव! अत्थि मे गेहे कुडुम्बभरणपज्जत्तो अत्थो। तस्स विणिमएण (ढ) मुच्चिज्जदु मे पिअवअस्सो चन्दणदासो त्ति। (४२)

राक्ष। [स्वगतम्] साधु जिष्णुदास! साधु। अहो! दर्शितो मित्रस्नेहः। कुतः—

---

(३९) अस्ति, जानाति आर्यः इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम ?

(४०) स एतस्य जिष्णुदासस्य प्रियवयस्यो भवति।

(४१) ततो जिष्णुदासेन प्रियवयस्यस्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः।

(४२) देव! अस्ति मे गेहे कुटुम्बभरणपर्याप्तोऽर्थः। तस्य विनिमयेन मुच्यतां प्रियवयस्यश्चन्दनदास इति।

---

(ट) अपावृतं उद्घाटितं छन्न, अभिप्रायः। अस्मद्विनाशस्य शोकप्रकाशस्य च द्वारं उपायेन; तस्य द्वारं आगमनमार्गः। दैवेन भाग्येन। हृदय चित्त। स्थिरीभव निश्चलं भव, अधैर्यं निराकुरु इति भावः। कष्टतरं अतिदुःखावहं। आकर्णनीयं श्रोतव्यं। मित्रेषु वत्सलः स्नेहवान् मित्रवत्सलः। साधुः सज्जनः।

(ठ) शोकवज्रपातः शोक एव वज्रपातः पतनं। अभ्यर्णः समीपवर्ती।

(ड) स्नेहसदृशं स्नेहानुरूपं। विज्ञप्तः निवेदितः।

(ढ) कुटुम्बानां आत्मीयानां, भरणे परिपालने, पर्याप्तः प्रभुः, अर्थः वित्तं। विनिमयेन परिवर्त्तनेन।

पितॄन् पुत्राः पुत्रान् परवदभिहिंसन्ति पितरो,
यदर्थे सौहार्दं सुहृदि च समुज्झन्ति सुहृदः ।
प्रियं यद्यस्त्यक्तुं व्यसनिनि वयस्ये व्यवसितं,
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः ॥ १७

[प्रकाशम्] भद्र ! ततस्तथाऽभिहितेन सता किं प्रति मौर्येण ? (थ)

पुरु अज्ज ! तदो एव्व भणिदेण चन्दउत्तेण पडिभणिदो जिण्हुदासो,—"जिण्हुदास ! ण मए अत्थस्स कालणेण सेट्ठी च दासो संजमिदो, किंदु पच्छादिदो अणेण अमच्चरक्खस घरअणो, बहुसो आचिदेणावि ण समप्पिदो त्ति । ता जइ रक्खसस्स घरअणं समप्पेदि, तदो अत्थि से मोक्खो ; अ पाणहरो से दण्डो अम्हकोवं पडिमाणेदु त्ति । अदो वि जधा एव्व ण करिस्सदि" त्ति भणिअ, वज्झट्ठाणं आणीदो चन्द दासो । (त) तदो "जाव पिअवअस्सस्स चन्दणदासस्स असुणिद ण सुणोमि, ताव ज्जेव अत्ताणअं वावादेमि" त्ति, जलणे प

पितॄन् पुत्रा इत्यादि । यदर्थे यन्निमित्तं धनहेतवे इत्यर्थः । पुत्रास्तनयाः पितॄन् ज्ञान्, जनकाः पितरः पुत्रान् तनयान् परवत् परैव तुल्यं अभिहिंसन्ति अभिद्रुह्य तथा सुहृदः मित्राणि सुहृदि मित्रे सौहार्दं मैत्रीं समुज्झन्ति परित्यजन्ति । वयस्ये सु व्यसनिनि आपद्ग्रस्ते विपन्ने त्यक्तुमिच्छसि प्रियं प्रीतिप्रदं यमर्थं इति शेषः । यद्य व्यक्तुं विहातुं व्यवसितं समुद्यतः । स अयं अर्थः धनं वणिजस्तव वणिक्त्वेऽपि, वणिग् ऽपि वणिग्भावे वणिजो हि व्यवसायार्थं दुर्गममपि दूरं गत्वा धनमुपार्ज्य कष्टलब्धत्वात् कातरा भवन्ति इति भावः । कृतार्थः सफलः दानेनैव अर्थस्य साफल्यात् । आयास लब्धस्य प्राणेभ्योऽपि गरीयसः । एकेन मतिरर्थस्य दानमन्या विपत्तय । इति भावः ॥ १७

(थ) ततः तदनन्तरं तथा तादृशं अभिहितेन कथितेन । प्रतिपन्नं किं कृतं कथितम् ।

(त) प्रतिभणितः प्रत्युक्तः । प्रच्छादितः गोपायितः । गृहजनः पुत्रादि । बहुशः ब वारं । याचितेन प्रार्थितेन । न समर्पितः न प्रदत्तः । मोक्षः—बन्धनान्मुक्तिः । प्राणहरः जीवननाशकः । अस्मत्कोपं अस्मदीयरोषं । प्रतिमानयतु अनयत् यान्ति प्रापय इत्यर्थः । अन्योऽपि कश्चिज्जन एवं राजद्रोहाचरणं । वध्यस्थानं मशानं । आनीतः सं प्रस्थापितः ।

दुकामो सेट्ठी जिष्णुदासो णअरादो णिग्गदो (थ) अहं वि जाव पिअवअस्सस्स जिष्णुदासस्स असुणिदव्वं ण सुणेमि, ताव उब्बन्धिअ अत्ताणं वावादेमि त्ति, इमं जिण्णुज्जाणं आगदो म्हि ? (४२)

राक्ष। न खलु व्यापादितः चन्दनदासः ?

पुरु। अज्ज ! ण दाव वावादीअदि। सो क्खु संपदं पुणो पुणो अमच्चरक्खसस्स घरजणं जाचीअदि। ण सो मित्तवच्छलदाए जाचीअन्तो वि तं समप्पेदि। ता एदिणा कारणेण होदि से मरणस्स कालहरणं। (४२ क)

राक्ष। [सहर्षम् आत्मगतम्] साधु वयस्य ! चन्दनदास ! साधु, साधु !—

शिबेरिव समुद्भूतं शरणागतरक्षया।
विचीयते त्वया साधो ! यशोऽपि सुहृदा विना ॥ १८

---

(४२) आर्य ! तत एवं माणतम चन्द्रगुप्तेन प्रतिभणित श्रेष्ठी जिष्णुदास,—"जिष्णुदास ! न मया अर्थस्य कारणेन श्रेष्ठी चन्दनदास धर्षित किन्तु तस्यादितोऽनेन अमात्यराक्षसस्य गृहजन, बहुशो याचितेनापि न समर्पित इति। तद् यदि अमात्यराक्षसस्य गृहजन समर्पयसि, ततोऽस्ति अस्य मोक्ष , अन्यथा प्राणहरोऽस्य दण्डोऽस्त्येव प्रतिभासयन् इति। अन्योऽपि जनो यथा एव न करिष्यति" इति भणित्वा, वध्यस्थानमानीत चन्दनदास। ततो "यावत् प्रियवयस्यस्य चन्दनदासस्य अश्रोतव्य न शृणोमि, तावदेवात्मान व्यापादयामि" इति, ज्वलने प्रवेष्टुकाम श्रेष्ठी जिष्णुदासो नगरान्निर्गत। अहमपि यावत् प्रियवयस्यस्य जिष्णुदासस्य अश्रोतव्य न शृणोमि, तावदुद्बध्य आत्मान व्यापादयामि, इति इमं जीर्णोद्यानमागतोऽस्मि।

(४२ क) आर्य ! न तावत् व्यापाद्यते। स खलु साम्प्रत पुन पुन अमात्यराक्षसस्य गृहजनं याच्यते। न स मित्रवत्सलतया याच्यमानोऽपि त समर्पयति। तत् एतेन कारणेन भवति अस्य मरणस्य कालहरणम्।

---

(थ) अश्रोतव्य मरणरूपमश्राव्यवार्त्ता। ज्वलने अग्नौ। प्रवेष्टुकाम प्रवेशाभिलाषी।

शिबेरिवेत्यादि। हे साधो ! सज्जन ! शरणागतस्य आश्रितस्य रक्षया रक्षणेन तथा परित्राणेन समुद्भूत समुत्पन्न शिबे औशीनरस्य यश इव त्वया भवता, सुहृदा विना शरणागतसुहृद उपस्थिति विनापि इत्यर्थ। यश, ख्याति, विचीयते सञ्चीयते ॥ १८

[प्रकाशम्] भद्र! भद्र! गच्छ शीघ्रमिदानीं जिष्णुदासं ज्वलनप्रवेशात् निवारय। अहमपि चन्दनदासं मरणात् मोचयामि।

पुरु। अध, केण उण उवाएण अज्जो चन्दणदासं मरणादो मोचेदि? (४४)

राक्ष। [खड्गमाकृष्य] ननु अनेन व्यवसायमहासुहृदा निस्त्रिंशेन। (ध) ननु पश्य,—

> निस्त्रिंशोऽयं विगतजलदव्योमसङ्काशमूर्त्तिः,
> युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण।
> सत्त्वोत्कर्षात् समरनिकषे दृष्टसारः परैर्मे,
> मित्रस्नेहाद् विवशमधुना साहसे मां नियुङ्क्ते॥ १८

पुरु। अज्ज! एवं सेट्ठिचन्दणदासजीविदं होदि त्ति सुणिद, विसमदसाविभाअपरिणामपडिदो ण सक्कणोमि णिच्चिदपदं पडिवज्जुं। [विलोक्य पादयोर्निपत्य] अध, सुगिहीदणामधेआ! अमच्चरक्खसपादा तुम्हे त्ति, ता करेहि मे पसादं सन्देहच्छेदणेण। (४५)(न)

(४४) अथ केन पुनरुपायेन आर्य्यः चन्दनदासं मरणान्मोचयति?

(४५) आर्य्य! एवं श्रेष्ठिचन्दनदासजीवितं भवतीति श्रुत्वा विषमदशाविभागपरिणामपतितो न शक्नोमि निश्चितपदं प्रतिपत्तुम्। अथ सुगृहीतनामधेया अमात्यराक्षसपादा यूयमिति, तत् कुरु मे प्रसादं सन्देहच्छेदनेन।

(ध) व्यवसायस्य उद्यमस्य महासुहृदा अत्यर्थं सुहृद्भूतेन अनेन निस्त्रिंशेन खड्गेन। निस्त्रिंशोऽयमित्यादि। विगतः विनष्टः जलदः मेघो यस्मात्तत् विगतजलदं मेघविरहितं यत् व्योम आकाशं तेन तुल्यामूर्त्तिः आकृतिर्यस्य सः विगतजलदव्योमसङ्काशमूर्त्तिः उन्मुक्ताकाशतुल्य इत्यर्थः। युद्धे स्वामिनि या श्रद्धा आग्रहः तया पुलकित सञ्जातपुलकः युद्धश्रद्धापुलकितः समरादररोमाञ्चित इत्यर्थः। करेण हस्तेन सह प्राप्तसख्यः चिरमित्यात् लब्धमैत्रः। सत्त्वोत्कर्षात् बलातिरेकात्, परैः शत्रुभिः समरनिकषे सङ्ग्रामरूपपरीक्षाप्रस्तरे दृष्टसारः अवलोकितसामर्थ्यः अनुभूतवीर्य्य इत्यर्थः। मे मम अयं निस्त्रिंशः खड्गः अधुना इदानीं मित्रस्नेहात् सुहृत्प्रेम्णा विवशं पराधीनं दुर्व्वलमित्यर्थः वीतोत्साहत्वादिति भावः। मां साहसे सहसासम्पाद्ये युद्धकार्य्ये इत्यर्थः नियुङ्क्ते नियोजयति। अत्रोत्प्रेक्षालङ्कारः। मन्दाक्रान्तावृत्तम्॥ १८

(न) विषमं दारुणं यो दशापरिणामः अवस्थापरिपाकः तत्र निपतितः विषमदशा

राच। भद्र ! सोऽहम् अनुभूतभर्त्तृवंशविनाशः सुहृद्विनाशहेतुः अनार्य्यो दुर्गृहीतनामा यथार्थो राक्षसः। (प)

पुरु। [सहर्षं पुनः पादयोर्निपत्य] पसीदध पसीदध। हीमाणहे। दिट्ठिआ कदत्थोम्हि। (४६)

राच। भद्र ! उत्तिष्ठ उत्तिष्ठ, अलमिदानीं कालहरणेन, निवेद्यतां जिष्णुदासाय, (फ) यदेष राक्षसः चन्दनदासं मरणात् मोचयति। [इति "निस्त्रिंशोऽयम्" इत्यादि पठन् खड्गं परिक्रामति]।

पुरु। [पादयोर्निपत्य] पसीदन्तु पसीदन्तु अमच्चरक्खसपादा। अत्थि दाव एत्थ णअरे पढमम् चन्दउत्तहदएण अज्जसअडदासस्स वधो आणत्तो। सो अ केणावि वज्झट्ठाणादो अवहरिअ, देसन्तरं अववाहिदो। तदो चन्दउत्तहदएण कोस पमादो किदोत्ति अज्जसअडदासवधवञ्चणाए समुज्जलिदो रोसग्गी घादअजणवधजलेण णिव्वाविदो। तदो पहुदि घादआ जं कं पि गहीदसत्थं अपुव्वं पुरुसं अग्गदो पच्छादो वा पेक्खन्ति, तदो अद्धपधे ज्जेव अत्तणो जीविदं परिरक्खन्तो अप्पमत्ता एदे अप्पत्तवज्झट्ठाणं वज्झं वावादेन्ति (ब)। ता एव्वं गहीदसत्थेहिं अमच्चपादेहिं तहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स वहो तुवराविदो होदि। (४७) [इति निष्क्रान्तः।]

---

(४६) प्रसीदत प्रसीदत। आश्चर्य्यम्। दिष्ट्या कृतार्थोऽस्मि।

(४७) प्रसीदन्तु प्रसीदन्तु अमात्यराक्षसपादाः। अस्ति तावदत्र नगरे प्रथमं चन्द्रगुप्तहतकेन आर्य्यशकटदासस्य वध आज्ञप्तः। स च केनापि वध्यस्थानादपहृत्य देशान्तरम् अपवाहितः। ततश्चन्द्रगुप्तहतकेन कस्मात् प्रमादः कृत इति आर्य्यशकटदासवधवञ्चनया समुज्ज्वलितो रोषाग्निः घातकजनवधजलेन निर्वापितः। ततः प्रभृति घातका यं कमपि गृहीतशस्त्रम् अपूर्वं पुरुषमग्रतः पश्चाद्वा प्रेक्षन्ते, तदा अर्द्धपथे एवात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता एते अप्राप्तवध्यस्थानं वध्यं व्यापादयन्ति। तस्मादेवं गृहीतशस्त्रैः अमात्यपादैः तत्र गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधः त्वरायितो भवति।

---

परिणामनिपतितम् अतिदुर्दशापन्नो इत्यर्थः। निश्चितपदं स्थिरपदं प्रतिपत्तुं अवरोढुं ज्ञातुमित्यर्थः। सन्देहनिर्णयेन सन्देहापनोदनेन प्रकृतपरिचयदानम् अनुगृहाण इत्यर्थः।

(प) अनुभूतः भर्त्तुः स्वामिनः वंशस्य विनाशः निधनं येन स तथोक्तः। सुहृदां मित्राणां विनाशहेतुः निधनकारणम्। अनार्य्यः असाधुः। दुर्गृहीतनामा अपुण्यनामधेयः। यथार्थः अनुगतार्थः राक्षसः।

(फ) कालहरणेन समयक्षेपेण। निवेद्यतां विज्ञाप्यताम्।

(ब) वधः मारणम् आज्ञप्तः आदिष्टः। केनापि अनिर्दिष्टपुरुषेण। वध्यस्थानात् श्मशानात्। अपहृत्य अपसार्य। अपवाहितः देशान्तरं नीतः। आर्य्यशकटदासस्य वधे मरणे

राक्ष। [ स्वगतम् । ] अहो ! दुर्बोधश्चाणक्यवटोर्नीतिमार्गः । कुतः—

यदि स शकटो नीतः शत्रोर्मतेन ममान्तिकं,
किमिति निहतस्तेन क्रोधाद्वधाधिकृतो जनः ?
अथ न कृतकं तादृग्लेखं कथं नु विभावये-
दिति मम मतिस्तर्कारूढा न पश्यति निश्चयम् ॥ २०

[ विचिन्त्य ] तत्कालात्,—

नायं निस्त्रिंशकालः, प्रथममिह कृते घातकानां विघाते,
नीतिः कालान्तरेण प्रकटयति फलं किं तथा कार्य्यमत्र ।
औदासीन्यं न युक्तं, प्रियसुहृदि गते मत्कृते चातिघोरां
व्यापत्तिं, ज्ञातमस्य स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥२१

। [इति निष्क्रान्ताः सर्वे ] ।

या। वञ्चना प्रतारणा तया तथोक्तया। समुज्ज्वलित समुद्दीपित। रोषाग्नि क्रोधानल। गृहीतशस्त्र धृतशस्त्र। अपूर्वं अदृष्टपूर्वं अपरिचितमित्यर्थः। प्रेक्षणे पश्यन्ति। आत्मन जीवित जीवन परिरक्षन्त परिपालयन्त, अप्रमत्ता सावधाना। अथात अनधिगतं वध्यस्थाने श्मशाने येन स तथोक्तम्।

यदि स इत्यादि। यदि शत्रो चन्द्रगुप्तस्य मतेन अभिप्रायेण स शकटः मम अन्तिकं नीत प्रापित वध्यव्यापादात् अपवाह्य इति शेष। तदा क्रोधात् रोषात् तेन चन्द्रगुप्तेन वधे मारणे अधिकृत नियुक्त वधाधिकृत घातक जन निहत व्यापादित इति किम् किमर्थं निहत इत्यर्थः। अथ पक्षान्तरे शकटदासस्य अपवाहनं यदि कृतकं असत्यं छद्मकृत न भवेत् तदा तादृक् मुद्राङ्कितं लेखं पत्रं कथं केन प्रकारेण विभावयेत् विचिन्तयेत्। मम मति इति एवम्प्रकारेण तर्कारूढा सन्देहभञ्जनार्थे विविधतर्कमाश्रिता निश्चयं न पश्यति। अत्र काव्यलिङ्गमलङ्कार। हरिणीवृत्तं ॥

नायमित्यादि। प्रथमं पूर्वं इह अस्मिन् स्थाने घातकानां विघाते व्यापादने कृते सति अयमेव निस्त्रिंशस्य खड्गस्य खड्गप्रयोगस्य काल समय न भवति। गृहीते हि खड्गे चन्दनदासनिधनं द्रुततरं सम्पद्येत इत्यर्थः। तर्हि नीतिमवलम्ब्य तां कूटयुक्तिप्रयोगेणैव चन्दनदासस्य मोक्षं साधयितव्य तदपि न सम्भवतीत्याह—नीति नयप्रयोग कालान्तरेण विलम्बकालेन फलं प्रकटयति प्रकाशयति। अत्र एतस्मिन् विषये तया नीत्या किं कार्य्यं सम्पाद्यं भवदिति शेष न किमपीत्यर्थः। मत्कृते मदर्थे अतिघोरां अतिविषमां व्यापत्तिं महतीं विपदं गते प्राप्ते प्रियसुहृदि चन्दनदासे, मम औदासीन्यं अनुद्योगः तूष्णीम्भाव इत्यर्थः न युक्तं उचितं। ज्ञातं विदितं विवेकेनावधारितं अहं इमां एतां स्वतनुं निजदेहं अस्य चन्दनदासस्य निष्क्रयं वेतनं इति निश्चय मोचनमूल्यं तं कल्पयामि विदधामि। मद्देहसमर्पणेनैव अहं चन्दनदासं मोचयितुं शक्नोमि इत्यर्थः। अत्र परिकरालङ्कार। स्रग्धरावृत्तम् ॥२१

॥ इति मुद्राराक्षसव्याख्यायां शिशुबोधिन्यां षष्ठोऽङ्कः समाप्तः ।

# सप्तमोऽङ्कः।

[ ततः प्रविशति चण्डालः ]।

चण्ड।। ओसलध अज्जा! ओसलध, अवेध (क) माणहे! अवेध,—

जइ लक्खिदुं महध पाणे, विहवे, कुले, कलत्ते अ।
पलिहलध ता विसं विअ लाआपत्थं पअत्तेण॥ १ (१)

अविअ,—

होदि पुलिसस्स वाही मलणं वा, सेविदे अपत्थे वि।
लाआपत्थे उण सेविदे सअलं वि कुलं मलदि॥ २ (२)

ता जइ ण पत्तिआअध, तदा पेक्खध एदं लाआपत्थकालिणं सेट्ठिचन्दणदासं वज्झट्ठाणं आणीअमाणं सपुत्तदालं। [आकाशे] अज्जा! किं भणाध? अत्थि किं चन्दणदासस्स मोक्खोवाओ त्ति? कुदो से अधण्णस्स मोक्खोवाओ? अह उण अत्थि,—जो जइ अमच्चलक्खसस्स घलअणं समप्पेदि। [पुनराकाशे] किं भणाध? एसे सलणागदवच्छले अत्तणो जीविदस्स कालणेण ईलिसं अकज्जं ण कलिस्सदि त्ति? अज्जा! जइ एव्व, तेण हि अवधालेध से सुभगदिं। किं दाणिं तुम्हाणं एत्थ पडीआलविआलेण? (ख) (३)

---

(१) अपसरत आर्याः! अपसरत अपेत मान्याः! अपेत,—

यदि रक्षितुं महध्वं प्राणान्, विभवान्, कुलानि, कलत्राणि च।
परिहरत तस्मात् विषमिव राजापथ्यं प्रयत्नेन॥ १

(२) अपिच,—भवति पुरुषस्य व्याधिर्मरणं वा सेविते अपथ्ये ऽपि।
राजापथ्ये पुनः सेविते हि सकलमपि कुलं म्रियते।

---

(क) अपसरत अपसृता भवत। अपेत मार्गात् अपगच्छत।

यदि रक्षितुमित्यादि। यूयं यदि, प्राणान् जीवनं, विभवान् धनानि, कुलानि वंशान, कलत्राणि भार्य्याः रक्षितुं स्थिरं स्थापयितुं महध्वं अभिलषत। तस्मात् विषं गरलमिव राजापथ्यं राज्ञः अहिताचरणं प्रयत्नेन आयत्नेन परिहरत परित्यजत॥ १

भवति इत्यादि। अपथ्ये अनिष्टकारिणि वस्तुनि सेविते भुक्ते सति—पुरुषस्य भोक्तुः जनस्य व्याधिः पीडा मरणं मृत्युर्वा भवति। पुनः राजापथ्ये राज्ञः अहिते सेविते आचरिते सति सकलं समग्रं कुलं वंशः म्रियते विनश्यति॥ २

(ख) प्रत्ययञ्च प्रतीता भवत। प्रेक्षध्वं अवलोकयत। राजापथ्यकारिणं राज्ञः

[ ततः प्रविशति द्वितीयचण्डालानुगतो वध्यवेशधारी शूलं स्कन्धेन आदाय कुटुम्बिन्या ( ग ) पुत्रेण च अनुगम्यमानः चन्दनदासः। ]

चन्दन। हद्धी ॥ हद्धी ॥ अह्मारिसाणं वि कधं णिच्चचारित्तभङ्गभीरूणं चोरजणाणं विअ मरणं पत्तं त्ति। णमो णमो किदन्तस्स। अह वा ण णिसंसाण उदासीणेसु इदरेसु वा विसेसो अत्थि ? (४) ( घ ) तथाहि —

मोत्तूण आमिसाइं मरणभएण तिणेहिं जीवन्तो।
वाहाणं मुद्धहरिणे हन्तुं को णाम णिब्बन्धो ? ॥ २ (५)

[ समन्तादवलोक्य ] भो पिअवअस्स जिणुदास! कधं पडि-

---

( ३ ) तद् यदि न प्रत्ययध्वे, तदा प्रेक्षध्वम् एतं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं वध्यस्थानमानीयमानं सपुत्रकलत्रम्। आर्यौ! किं भणथ? अस्ति किं चन्दनदासस्य मोक्षोपाय इति? कुतोऽस्य मन्दस्य मोक्षोपायः? एतत् पुनरस्ति,—स यदि अमात्यराक्षसस्य गृहजनं समर्पयति। किं भणथ? एष शरणागतवत्सलः आत्मनो जीवितस्य कारणेन ईदृशमकार्यं न करिष्यतीति? आर्यौ! अनेन तेन हि अवधारयत अस्य शुभगतिम्। किम् इदानीं युष्माकं प्रतीकारविचारेण?

( ४ ) हा धिक्, हा धिक्! अस्मादृशानामपि कथं नित्यचारित्रभङ्गभीरूणां चोरजनानामिव मरणं प्राप्तमिति। नमो नमः कृतान्तस्य। अथवा न नृशंसानाम् उदासीनेषु इतरेषु वा विशेषोऽस्ति। तथाहि —

( ५ ) मुक्त्वा आमिषाणि मरणभयेन तृणैर्जीवतः।
व्याधानां मुग्धहरिणान् हन्तुं को नाम निर्बन्धः ? ॥ २

---

अनिष्टकर। वध्यस्थानं श्मशानं। आनीयमानं उपस्थाप्यमानं। सपुत्रकलत्रं स्त्रीपुत्रसमन्वितं। मोक्षोपायः मुक्तिहेतुः। शरणं आगतेषु प्रपन्नेषु वत्सलः स्नेहवान्। आत्मनः स्वस्य, जीवितस्य कारणेन प्राणधारणहेतुना। ईदृशं एवम्विधं राक्षसकलत्रसमर्पणरूपं अकार्यं अपकर्म। अवधारयत निश्चितं स्थिरं जानीतेत्यर्थः। शुभगतिं। सद्गतिं। परत्र शरणागतत्राणात् इह राक्षसम्मेलनात् सद्गतिः सुनिश्चिता इत्यर्थः॥

( ग ) कुटुम्बिन्या पुत्रादिमत्या गृहिण्या। अनुगम्यमानः अनुस्रियमाणः।

( घ ) चारित्रभङ्गः सत्स्वभावात् स्खलनं नित्यं यथा तथा चारित्रभङ्गात् भीरूणां भयभीतानां। चौरजनानां तस्कराणां। नृशंसानां क्रूराणां उदासीनेषु तटस्थेषु अनासक्तेषु इत्यर्थः। इतरेषु अन्यासक्तेषु साधारणेषु। इत्यर्थः। विशेषः भेदः।

१ मुक्त्वा इत्यादि। मरणभयेन मृत्युभयात् आमिषाणि मत्स्यादीनि मुक्त्वा विहाय

वअण वि मे ण पडिवज्जसि त्ति। अधवा, दुल्लहा क्खु ते पुरिसा, जे इमस्सिं काले दिट्ठिवहे वि चिट्ठन्ति। [सबाष्पम्।] एदे अह्मप्पिअवअस्सा अस्सुवादमेत्तकेण किदप्पदीआरा ससरीरेहिं णिवत्तमाणा परिवड्ढमाणसोअदीणवदणा, वाप्फगरुआए दिट्ठीए (ङ) मं अणुगच्छन्दि। (६)

[इति परिक्रामति]।

चाण्डालौ। [परिक्रम्य अवलोक्य च] अज्ज चन्दणदास। आगदोसि वज्झट्ठाणं, ता विसज्जेहि घरजणं। (७)

चन्द। अज्जे। कुटुम्बिणि। णिवत्तस्स तुमं सपुत्ता। वज्झट्ठाणं क्खु एदं, अदो अवरं अभूमि क्खु अणुगच्छिदुम्। (८) (छ)

कुटु। [सबाष्पम्] परलोअ पत्थिदो अज्जो, ण उण देसन्तरं, ता अजोग्गो दाणी कुलजणस्स णिवत्तिदुं। (९)

---

(६) आर्य प्रियवयस्य जिष्णुदास। कथं प्रतिवचनमपि मे न प्रतिपद्यसे इति। अथवा दुर्लभाः खलु ते पुरुषाः ये अस्मिन् काले दृष्टिपथेऽपि तिष्ठन्ति। एतेऽस्मत्प्रियवयस्या अश्रुपातमात्रेण कृतप्रतीकाराः स्वशरीरैर्निवर्त्तमानाः परिवर्द्धमानशोकदीनवदना बाष्पगुर्व्या दृष्ट्या माम् अनुगच्छन्ति।

(७) आर्य चन्दनदास। आगतोऽसि वध्यस्थानं, तत् विसर्जय गृहजनम्।

(८) आर्ये। कुटुम्बिनि। निवर्त्तस्व त्वं सपुत्रा। वध्यस्थानं खलु एतत्, अतोऽपरम् अभूमिः खलु अनुगन्तुम्।

(९) परलोकं प्रस्थित आर्यः, न पुनर्देशान्तरं, तदयोग्यमिदानीं कुलजनस्य निवर्त्तितुम्।

---

तृणे घासे जीवतः प्राणान् धारयतः मुग्धहरिणान् सुन्दरमृगान् हन्तुं व्यापादयितुं व्याधानां मृगव्यधां को नाम निर्बन्ध आग्रहः ॥ २

(ङ) प्रतिवचनं प्रत्युत्तरं। न प्रतिपद्यसे न अङ्गीकरोषि प्रत्युत्तरं न ददासीत्यर्थः। अस्मिन् समुपस्थिते काले मृत्युकाले। दृष्टिपथे चक्षुर्गोचरे। एते इमे अस्मत्प्रियवयस्या मदीयाभिमतसुहृदः। अश्रुपातमात्रेण केवलेन बाष्पविसर्ज्जनेन। स्वशरीरे निजदेहैः उपलक्षिताः। निवर्त्तमाना गृहं प्रतिगच्छन्तः। परिवर्द्धमानेन शोकेन दीनानि क्लिष्टानि वदनानि येषां ते परिवर्द्धमानशोकदीनवदनाः। बाष्पगुर्व्या अश्रुपूर्णया दृष्ट्या।

(च) निवर्त्तस्व गृहं प्रतिनिवृत्ता भव। अतः अस्मात् हेतोः। अभूमिः अनुपयुक्तस्थानं अनुगन्तुं अनुयातुम्।

(छ) परलोकं लोकान्तरं, प्रस्थितः प्रयातः उद्यतः। देशान्तरं विभिन्नं देशं। देशान्तरप्रस्थितस्यैव अनुगमननिषेधात् लोकान्तरप्रस्थितस्य तव अनुगमनं युक्तमेवेत्यर्थः।

चन्द। अज्जे! सच्चं, मित्तकज्जेण मम विणासो, ण पुरिसदोसेण। ता किं हरिसट्ठाणे वि रोदसि त्ति? (१०) (ज)

कुटु। अज्ज! जइ एव्वं ता अणुचिदं दाणीं कुलजणेण णिव-त्तिदुं। (११)

चन्द। अध इं ववसिदं अज्जाए? (१२) (झ)

कुटु। [सबाष्पम्] भत्तुणो चलणमणुगच्छन्तीए अज्जाणुग्गहो होदु। (१३) (ञ)

चन्द। अज्जे! दुव्ववसिदं एदं दे, ता दाणीं अज्जाए अअं असुणिदलोअव्ववहारो कुमारो अणुगेह्णिदव्वो त्ति। (१४) (ट)

कुटु। अणुगेह्णन्तु णं पसण्णाओ भअवदीओ कुलदेवदाओ। जाद! पुत्तअ! पणम अपच्छिमेसु पिदुणो पाएसु। (१५) (ठ)

---

(१०) आर्ये! सत्यं, मित्रकार्येण मम विनाशः, न पुरुषदोषेण। तत् किं हर्षस्थानेऽपि रोदिषि इति?

(११) आर्य! यद्येवं, तदनुचितम् इदानीं कुलजनेन निवर्त्तितुम्।

(१२) अथ किं व्यवसितम् आर्यया?

(१३) भर्त्तुश्चरणमनुगच्छन्त्या आर्यानुग्रहो भवतु।

(१४) आर्ये! दुर्व्यवसितमिदं ते, तदिदानीम् आर्यया अयम् अश्रुतलोकव्यवहारः कुमारोऽनुग्रहीतव्य इति।

(१५) अनुगृह्णन्तु एनं प्रसन्ना भगवत्यः कुलदेवताः। जात! पुत्रक! प्रणम अपश्चिमेषु पितुः पादेषु।

---

(ज) सत्यं तथा यदुक्त [illegible] इत्यर्थः। पुरुषदोषेण पुरुषानुचितदुष्कर्मकरण इत्यर्थ। तत् तर्हि। किमर्थं। हर्षस्थाने आनन्दभूमौ, आनन्दसमये वा।

(झ) किं किमार्य्या अर्थेऽव्ययं। व्यवसितं कर्त्तुमिष्टम्।

(ञ) भर्त्तुः स्वामिनः। चरणं पादपद्मं। अनुगच्छन्त्या अनुसरन्त्या मम इति शेषः। आर्यानुग्रह आर्यायाः [illegible] अनुमरणाय आदेशरूप प्रसाद भवतु अस्तु।

(ट) दुर्व्यवसितं दुश्चेष्टितं असदाचरणमित्यर्थ। न श्रुत आकर्णितः [illegible] लोकव्यवहारः लोकाचारो येन स अश्रुतलोकव्यवहारः. [illegible] प्रतिपालयितव्य इत्यर्थः।

(ठ) अनुगृह्णन्तु। दयन्तां। जात वत्स। अपश्चिमेषु चरमेषु चरमदर्शनेषु, अत परमदर्शनाभावादिति भाव।

पुत्र। [पादयोर्निपत्य] ताद! मए तादविरहिदेण किं अणुचिट्ठिदव्वं? (१६) (ङ)

चन्द। पुत्त! चाणक्कविरहिदे देसे वसिदव्वं। (१७)

चण्डालौ। अज्ज! चन्दणदास! णिखादे शूले, ता दाणीं सज्जो होदि। (१८)

कुटु। अज्जा! परित्ताअध परित्ताअध। (१९)

चन्द। भद्दमुह! मुहुत्तअं चिट्ठ। अइ जीविदवच्छले! किं एत्थ आक्कंदसि? सग्गं गदा क्खु ते देवा णन्दा, जे दुक्खिदं इत्थीजणं पइदिणं अणुकम्पन्ति। (२०) (ट)

प्रथमचाण्डालः। अले वेणुवेत्तका! गेह्न इमं चन्दणदासं। घलजणो सअं ज्जेव गमिस्सदि। (२१)

द्वितीयचाण्डालः। अले वज्जलोमआ! एसे गेह्नामि। (२२)

चन्द। भद्दमुह! चिट्ठ मुहुत्तअं, जाव पुत्तअं परिस्सजामि। [इति पुत्रं परिष्वज्य मूर्ध्नि समाघ्राय।] जाद! पुत्तअ! अवस्सं भविदव्वे वि विणासे मित्तकज्जं समुव्वहमाणो विणासमणुभवामि। (२३)(ण)

---

(१६) तात! मया तातविरहितेन किमनुष्ठातव्यम्?

(१७) पुत्र! चाणक्यविरहिते देशे वस्तव्यम्।

(१८) आर्य! चन्दनदास! निखात शूल, तद् इदानीं सज्जो भव।

(१९) आर्याः! परित्रायध्वं परित्रायध्वम्।

(२०) भद्रमुख! मुहूर्त्तं तिष्ठ। अयि जीवितवत्सले! किमत्र आक्रन्दसि? स्वर्गं गताः खलु ते देवा नन्दाः, ये दुःखितं स्त्रीजनं प्रतिदिनम् अनुकम्पन्ते।

(२१) अरे वेणुवेत्रक! गृहाण इमं चन्दनदासम्। गृहजनः स्वयमेव गमिष्यति।

(२२) अरे वज्रलोमक! एष गृह्णामि।

(२३) भद्रमुख! तिष्ठ मुहूर्त्तं, यावत् पुत्रकं परिष्वजे। जात! पुत्रक! अवश्यम्भवितव्येऽपि विनाशे मित्रकार्यं समुद्वहमानो विनाशमनुभवामि।

---

(ङ) तातविरहितेन जनकेन वियुक्तेन। अनुष्ठातव्यं विधातव्यं।

(ट) वधार्हस्यापि चन्दनदासस्य आर्यपदेन सम्बोधनं तस्य महानुभावत्वसूचनार्थं। निखात भूमौ प्रोथित शूलः; सज्जः उद्युक्तो भव। जीवितेषु जीवनेषु वत्सला स्नेहवती जीवितवत्सला तत्सम्बोधने। अनुकम्पन्ते दयन्ते।

(ण) परिष्वजे आलिङ्गयामि। अवश्यं भवितव्ये घटितव्ये; विनाशे मरणे। मित्र

राक्ष। त्वदीयस्य सुचरितैकदेशस्य अनुकरणं किल । (द)

चन्द। अमच्च ? सव्वं वि मे णिप्फलं एदं पआसं करन्तेण ण मे प्पिअं अणुचिट्ठिदं अमच्चेण । (२८) (ध)

राक्ष। सखे चन्दनदास ? कृतमुपालम्भेन, स्वार्थप्रधानो (न) हि जीवलोकः । भद्रमुख ! अयमयं निवेद्यतां तावद् दुरात्मने चाणक्याय ।

चण्डाली। अध किं त्ति ? (२९)

राक्ष।—

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता,
नीतं येन यशस्विना प्रलघुतामौशीनरीयं यशः ।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना,
पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः ॥ ५

---

(२८) अमात्य ! सर्वमपि मे निष्फलम्—इमं प्रयासं कुर्वता न मे प्रियमनुष्ठितम् अमात्येन ।

(२९) अथ किमिति ?

---

(द) त्वदीयस्य भवदनुष्ठितस्य सुचरितैकदेशस्य सदनुष्ठानैकभागस्य न तु पूर्णस्य इत्यर्थ । अनुकरण सदृशानुष्ठानम् ।

(ध) सर्वं त्वत्कृतानुष्ठानं निष्फलं विफलं जातमिति शेष । इमं प्रयासं मदवस्थाया निष्क्रामणरूपं प्रयत्नमित्यर्थ । कुर्वता अमात्येन मे न प्रियं अनुष्ठितम् ।

(न) उपालम्भेन तिरस्कारेण । कृत अलं । स्वार्थं स्वप्रयोजनं प्रधानं यस्य स स्वार्थप्रधान स्वार्थपर ।

दुष्कालेऽपीत्यादि । असज्जनानां नीचानां रुचिरनुरागो यत्र तस्मिन् असज्जनरुचौ दुष्काले असत्समये कलौ कलियुगे प्राणै जीवनेन परं अन्य रक्षता त्रायमाणेन यशस्विना ख्यातिमता येन चन्दनदासेन औशीनरीयं शिबिभूपतेरर्जितं यश प्रलघुतां हीनतां नीतं । विशुद्धात्मना निर्मलचरितेन येन इति शेष । सुचरितै सदाचारै बुद्धानां अतिदयावतामपि बुद्धमतावलम्बिनां चेष्टितं सदाचरणं क्लिष्टं मलिनीकृतं । पूजार्ह सम्मानयोग्य स चन्दनदास यत्कृते यस्य राक्षसस्य निमित्तं यत्कलत्ररक्षणाय इत्यर्थ । तव वध्यत्वं गत प्राप्त । स एष राक्षस अयं समुपस्थित इति शेष ॥ शार्दूलविक्रीडितं वृत्तम् ॥ ५

प्रथम। अले वेणुवेत्तआ! तुमं दाव सेट्ठिचन्दणदासं गेह्णिअ, इमस्स मसाणपादवस्स छाआए (प) मुहुत्तअं चिट्ठ, जाव अहं अज्जचाणक्कस्स णिवेदेमि, जधा गहीदो अमच्चलक्खसो त्ति। (२०)

द्वितीय। अले वज्जलोमआ! एव्व होदु। (२१)

[इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः]।

प्रथम। [राक्षसेन सह परिक्रम्य] के के एत्थ दुआलिआण? णिवेदध दाव, णन्दकुलसेण्णसञ्चअचुण्णकुलिसस्स मोलिअकुलपदिट्ठाविदधम्मसञ्चअस्स अज्जचाणक्कस्स। (२२) (फ)।

राक्ष। [स्वगतम्।] एतदपि नाम राक्षसेन श्रोतव्यम्।

प्रथ। एसो क्खु अज्जणीदिणिअमसंजमिदबुद्धिपलिसले गहीदे अमच्चलक्खसे त्ति। (२३) (ब)

[ततः प्रविशति जवनिकावृतशरीरो मुखमात्रदृश्यः सहर्षं चाणक्यः]।

चाण। भद्र! कथय, कथय।—

---

(२०) अरे वेणुवेत्रक त्वं तावत् श्रेष्ठिचन्दनदासं गृहीत्वा, अस्य श्मशानपादपस्य छायायां मुहूर्त्तं तिष्ठ, यावदहम् आर्य्यचाणक्यस्य निवेदयामि यथा गृहीतोऽमात्यराक्षस इति।

(२१) अरे वज्रलोमक। एवं भवतु।

(२२) के कोऽत्र दौवारिकाणाम्? निवेदयत तावत्, नन्दकुलसैन्यसञ्चयचूर्णनकुलिशस्य मौर्य्यकुलप्रतिष्ठापितधर्म्मसञ्चयस्य आर्य्यचाणक्यस्य।

(२३) एष खलु आर्य्यनीतिनियमसंयमितबुद्धिपरिसरो गृहीतोऽमात्यराक्षस इति।

---

(प) श्मशानपादपस्य श्मशानवृक्षस्य। छायायाम् अनातपस्थाने।

(फ) दौवारिकाणां द्वारपालानां। नन्दकुलस्य नन्दवंशस्य य सैन्यसञ्चय सेनासमवाय "समवायचयौगण" इत्यमरः। तस्य चूर्णने प्रमथने कुलिशं वज्र इव तस्य नन्दकुलसैन्यसञ्चयचूर्णनकुलिशस्य, मौर्य्यकुले मौर्य्यवंशे प्रतिष्ठापित सुस्थिरीकारित धर्म्मसञ्चय धर्म्मसमवायो येन तस्य मौर्य्यकुलप्रतिष्ठापितधर्म्मसञ्चयस्य।

(ब) आर्य्यस्य नीत्या नियमेन च संयमित वशीकृत बुद्धेः परिसरो यस्य स आर्य्यनीतिनियमसंयमितबुद्धिपरिसरः।

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी ?
पाशैः केन सदागतेरगतिता सद्यः समासादिता ? ।
केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे ? ।
भीमः केन च नैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ? ॥६

चण्डा। ण णोदिणिउणबुद्धिणा अज्जेण च्चेव। (१४) (म)

चाण। भद्र ! मा मैवम्। नन्दकुलद्वेषिणा दैवेनेति ब्रूहि। (म)

राच। [विलोक्य स्वगतम्।] अये !! अयं स दुरात्मा, अथवा अयं स महात्मा कौटिल्यः। यतः,—

आकरः सर्वशास्त्राणां, रत्नानामिव सागरः ।
गुणैर्न परितुष्यामो, यस्य मत्सरिणो वयम् ॥ ७

चाण। [विलोक्य सहर्षम्।] अये ! अयम् अमात्यराक्षसः, येन महात्मना—

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः ।
चिरमायासिता सेना वृषलस्य मतिश्च मे ॥ ८

(१४) नयु णीतिनिपुणबुद्धिना आर्येणैव।

केनेत्यादि। उत्तुङ्गशिखानां महोन्नतज्वालानां कलापेन समूहेन कपिलः पिङ्गलवर्णः शिखी वह्निः केन जनेन पटान्ते वस्त्रप्रान्ते बद्धः निरुद्धः। केन जनेन पाशैः दामभिः सद्यः तत्क्षणं सदागतेः मातरिश्वनः अगतिता गमनाभावः समासादिता विहिता। केन जनेन अनेकपानां गजानां दानेन मदजलेन वासिता सुरभीकृता सटा यस्य सः अनेकपदानवासितसटः करिणां मदवारिसुरभितकेसरः सिंहः पशुराजः पञ्जरे अर्पितः स्थापितः। केन जनेन न एकः नैकः बहवः, अत्र नञर्थस्य न शब्देन सुप्सुपेति समासः। नक्राः कुम्भीराः मकराश्च यत्र सः नैकनक्रमकरः भीमः भीषणः दुस्तारः अर्णवः समुद्रः दोर्भ्यां बाहुभ्यां प्रतीर्णः सन्तीर्णः। राक्षससंग्रहमतिदुष्करं केन सम्पादितमित्यर्थः ॥ अप्रस्तुतप्रशंसालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ६

(म) नीत्या नयप्रयोगे निपुणा विचक्षणा बुद्धिः प्रज्ञा यस्य तेन।

(म) नन्दकुलद्वेषिणा नन्दवंशविपक्षेण दैवेन।

आकर इत्यादि। यतः यस्मात् अयं चाणक्यः सागरः समुद्रः रत्नानां माणिक्यादीनाम् इव सर्वशास्त्राणाम् आकरः खनिः आगम आकर इत्यर्थः। मत्सरिणः अन्यशुभद्वेषिणः वयं यस्य चाणक्यस्य गुणैः सामादिप्रयोगे दयादाक्षिण्यादिभिश्च न परितुष्यामः न हृष्यामः। एतेन राक्षसस्य गुणग्राहित्वं सूचितम् ॥ ७

गुरुभिरित्यादि। येन महात्मना राक्षसेन इति गद्यस्थमान्वयः। दीर्घजागरहेतुभिः

[ जवनिकाम् अपनीय उपसृत्य च । ] भो भो अमात्यराक्षस ! विष्णुगुप्तोऽभिवादयते ।

राक्ष ।· [ स्वगतम् ] अमात्य इति लज्जाकरमिदानीं विशेषणपदम् । [ प्रकाशम् ] भो भो विष्णुगुप्त ! न मां श्वपाकस्पर्शदूषितं स्प्रष्टुम् अर्हसि । (य)

चाण । अमात्यराक्षस ? नायं श्वपाकः अयं खलु दृष्टपूर्व एव भवता सिद्धार्थकनामा राजपुरुषः । योऽपि असौ द्वितीयः, सोऽपि सुसिद्धार्थकनामा राजपुरुष एव । ताभ्यामेव सह सौहार्दम् उत्पाद्य, शकटदासोऽपि तपस्वी तं तादृशम् अजानन् एव कपटलेखं मया एव लेखितः । (र)

राक्ष । [ आत्मगतम् । ] दिष्ट्या शकटदासं प्रति अपनीतो विकल्पः । ( ल )

चाण । किं बहुना, सङ्क्षेपतः कथयामि ।—

ये ते भद्रभटादयः, स च तथा लेखः, स सिद्धार्थकः,
तच्चालङ्करणत्रयं, स भवतो मित्रं भदन्तः किल ।
जीर्णोद्यानगतः स चार्त्तपुरुषः, क्लेशः स च श्रेष्ठिनः,
सर्व्वं मे—"..................[ इत्यर्द्धोक्ते लज्जां नाटयति ।
सर्व्वं मे वृषलस्य वीर ! भवता संयोगमिच्छोर्नयः ॥ ८

दीर्घकालं व्याप्य जागरस्य निद्राभावस्य हेतुभिः कारणभूतैः, गुरुभिः महद्भिः प्रयत्नाभिः समायोजनकष्टैः मे मम मतिर् हि. श्रमस्य सेना च चिरं दीर्घकालं व्याप्य आयासिता खेदिता । अत्र प्रस्तुतयोः सेनामत्योरेकधर्म्मसम्बन्धात् तुल्ययोगितालङ्कारः ॥ ८

( य ) लज्जाकरं अपमानकरम् । श्वपाकस्पर्शेन चाण्डालस्पर्शेन दूषितं अपवित्रं स्प्रष्टुं अयोग्यम् ।

( र ) पूर्व्वं दृष्ट, दृष्टपूर्व्वः । सौहार्द्दं प्रणयं । तपस्वी वराकः । तं ईदृशं तादृशं तथाभूतं । अजानन् अविदन् ।

( ल ) दिष्ट्या सौभाग्येन । अपनीत अपगतः । विकल्पः संशयः ।

ये ते भद्रभटादयः इत्यादि । ये ते भद्रभटादयः भद्रभटप्रभृतयः, प्रभवः [illegible] स च मित्रं पत्रं, स च सिद्धार्थकः, त्वदीयभृत्यः तत् अलङ्करणत्रयं, सः भवतः मित्रं सुहृत् भदन्त क्षपणकः जीर्णोद्यानगतः उद्यानेन चन्दनदासे तद्युक्तः आर्त्तपुरुषः, श्रेष्ठिनः चन्दनदासस्य क्लेशः कारागारमयं कष्टं, हे वीर ! इत्येतत्सर्व्वं भवता त्वया सह वृषलस्य चन्द्रगुप्तस्य संयोगं सम्मिलनं इच्छोः अभिलषतः मम नयः नीतिमूलकं । त्वदीयप्रभावमाहात्म्य एव चरणं सर्व्वमनुष्ठितमिदमेवं । आर्द्धर्श्लोकोक्तिं जगाम ॥ ८

तदेष वृषलस्त्वां द्रष्टुम् आगच्छति । पश्य एनम् ।

राक्ष । [स्वगतम् ।] का गतिः ? [प्रकाशम्] एष पश्यामि ।

[ततः प्रविशति सैन्यैः अनुगम्यमानो राजा ]।

राजा । [स्वगतम् ।] विनैव युद्धाद् आर्य्येण पराजितं दुर्जयं रिपुकुलमिति, यत् सत्यं लज्जित इव अस्मि (ब)। मम हि—

फलयोगमवाप्य सायकानां विधियोगेन विपक्षतां गतानाम् ।
न शुचेव भवत्यधोमुखानां, निजतूणीशयनव्रतं प्रतुष्ट्यै ॥ १०

अथवा,—

विगुणीकृतकार्मुकोऽपि जेतुं, भुवि जेतव्यमसौ समर्थ एव ।
स्वपतोऽपि ममेव यस्य तन्त्रे, गुरवो जाग्रति कार्य्यजागरूकाः ॥११

[चाणक्यम् उपगम्य ।] आर्य्य ! चन्द्रगुप्तः प्रणमति ।

चाण । वृषल ! सम्पन्नाः ते सर्व्वाशिषः । तद् अभिवादयस्व तत्र भवन्तम् अमात्यराक्षसम्; पैतृकस्तव अयम् अमात्यमुख्यः । (भ)

राक्ष । [स्वगतम् ।] योजितोऽनेन सम्बन्धः । (म)

(ब) युद्धात् विना संग्रामं ऋते । पराजितं अभिभूतं । दुर्जयं असह्यं । रिपुकुलं शत्रुवर्गं । यत्सत्यं सुनिश्चितं । लज्जितः व्रीडितः ।

फलयोगमवाप्येत्यादि । विधियोगेन दैवानुकूल्येन फलयोगं लौहफलयोगं, इष्टसिद्धिञ्च अवाप्य प्राप्य, विपक्षतां पक्षिपत्रविशिष्टतां प्रतिपक्षताञ्च गतानां प्राप्तानां तथा क्रियाभावजनितेन इष्टवियोगजनितेन च दुःखेन अधोमुखानां अवनतानाम् नतवदनानाञ्च सायकानां बाणानां महायानाञ्च, निजतूण्यां स्वतूणीरे शयनं अवस्थानं एव व्रतं, पक्षे निजगृहे शयनं एव व्रतं प्रतुष्ट्यै परितोषाय न भवति ॥ अत्र विरोधाभासोऽलङ्कारः । अत्र मालभारिणी वृत्तम् । "विषमे ससजा यदा गुरू चेत्सभरा येन तु मालभारिणीयम् ।" इति लक्षणात् ॥१०

विगुणीकृत—इत्यादि । स्वपतः शयानस्य किमपि अकुर्व्वतः निश्चिन्तस्य इत्यर्थः यस्य मम इव राज्ञः गुरवः महामान्याः अमात्यादयः तन्त्रे राज्यचिन्तायां कार्य्येषु जागरूकाः कर्त्तव्येषु अप्रमत्ताः सन्तः जाग्रति व्याप्रियन्ते प्रयतन्ते इत्यर्थः । असौ, अविगुणः विगुणः कृतः विगुणीकृतः गुणशून्यीकृतः कार्मुकः धनुर्यस्य सः विगुणीकृतकार्मुकः ज्याहीनधनुर्धरः सन् अपि भुवि पृथिव्यां जेतव्यं वशगाप्य(?) वस्तु जेतुं वशीकर्त्तुं लब्धुमित्यर्थः समर्थः शक्तः भवतीति शेषः । उपमानुप्राणितः काव्यलिङ्गालङ्कारः ॥ मालभारिणीवृत्तम् ॥ ११

(भ) सम्पन्नाः सफलाः । तत्रभवन्तं पूज्यं । पैतृकः पितृक्रमागतः । अमात्यमुख्यः मन्त्रिश्रेष्ठः ।

(म) अनेन चन्द्रगुप्तेन सह । सम्बन्धः सम्पर्कः । योजितः संघटितः ।

चाण। अमात्यराक्षस ! अपि इष्यते चन्दनदासस्य जीवितम् ?

राक्ष। भो विष्णुगुप्त ! कुतः सन्देहः ?

चाण। अमात्यराक्षस ! अगृहीतशस्त्रेण भवता अनुगृह्यते वृषल इत्यतः सन्देहः। (ङ) तद् यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते, ततो गृह्यताम् इदं शस्त्रम्।

राक्ष। भो विष्णुगुप्त ! मा मैवम्। अयोग्या वयम् एतस्य ग्रहणे, विशेषतः त्वया गृहीतस्य शस्त्रस्य। (क)

चाण। अमात्यराक्षस ! योग्योऽहम् अयोग्यो भवान् ! इति कथमेतत् ? पश्य,—

अश्वैः सार्धमजस्रदत्तकविकैः क्षामैरशून्यासने,
स्नानाहारविहारपानशयनस्वेच्छासुखैर्वर्जितान्।
माहात्म्यादतिपौरुषस्य भवतो दृप्तारिदर्पच्छिदः,
पश्यैतान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् गजान्॥ १५

अथवा किमनेन ? न खलु भवतः शस्त्रग्रहणम् अन्तरेण (ख) चन्दनदासस्य जीवितमस्ति।

राक्ष। [ स्वगतम् ]—

या इति तथा मूलजलक्षरणया नदीतटस्तरुः इव पतति पवनमति यथौ न लभते इत्यर्थः। सनृपायस्य चन्द्रगुप्तस्य आश्रयेण चाणक्यस्य यशोलाभ, असतुपायस्य मलयकेतोराश्रयेण मनेयं दुर्दशा इत्यर्थः। वसन्ततिलक वृत्तम् ॥ १४

(ङ) न गृहीतं शस्त्रं येन तेन अगृहीतशस्त्रेण अस्वीकृतास्त्रेण। अत शस्त्रा ग्रहणात्। सन्देह संशय। शस्त्रग्रहणे मन्त्रित्वा स्वीकारस्य अननुष्ठिते च तस्मिन् कथं विश्वास समुत्पद्यते इत्यर्थः।

(क) अयोग्या अपात्रभूता। विशेषतः विशेषेण। यतोऽपि ते योग्यतरत्वादिति भावः।

अश्वैः सार्धमित्यादि। इमानां मदोद्धतानां करीणां दर्पं किमनौति तस्य दृप्तारिदर्पच्छिदः उद्धतशत्रुगर्वापहारिणः अतिपौरुषस्य अत्यर्थं विक्रमवतः भवतस्तव माहात्म्यात् प्रभावात्, अजस्रदत्तकविके सततदत्तखलीने क्षामे कृशे अशून्यासने सततमध्यासितपादिभि अश्वै घोटकैः सार्द्धं सह, स्नान आहार विहार पान शयनञ्च तेषु यानि स्वेच्छासुखानि तै वर्जितान् विरहितान्, परिकल्पनाया युद्धसज्जाविशेषस्य व्यतिकरेण सम्पर्केण प्रोच्छूना स्फीताः यथा पृष्ठास्थिभागा येषां तान् तथोक्तान् एतान् इमान् गजान् हस्तिन पश्य अवलोकय। अत्र तुल्ययोगितालङ्कार। पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एक धर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥ इति लक्षणात् ॥ शार्दूलविक्रीडितं वृत्तम् ॥ १५

(ख) अन्तरेण विना, भवतः शस्त्रग्रहणं व्यतीत्य।

नन्दस्नेहगुणाः स्पृशन्ति हृदये, भृत्योऽस्मि तद्विद्विषां,
ये सिक्ताः स्वयमेव वृद्धिमगमंश्छिन्नास्त एव द्रुमाः ? ।
शस्त्रं मित्रशरीररक्षणकृते व्यापारणीयं मया,
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ॥ १६

[प्रकाशम्] भो विष्णुगुप्त ! उपानय खड्गम् । नमः सर्वकार्य्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय । का गतिः ? (ग) एष सज्जोऽस्मि ।

चाण । [सहर्षं शस्त्रम् अर्पयित्वा] वृषल ! वृषल ! अमात्यराक्षसेन इदानीं गृहीतशस्त्रेण अनुगृहीतः, दिष्ट्या वर्द्धते भवान् ।

राजा । आर्य्यप्रसाद एष चन्द्रगुप्तेन अनुभूयते । (घ)

[प्रविश्य पुरुषः] जेदु जेदु अज्जो । अज्ज ! एसो क्खु भद्दभडभाउराअणप्पमुहेहिं संजमिअकलचलणो मलअकेदू पड़िहारभूमिए अवत्थाविदो, ता एव्वं सुणिअ, एत्थ अज्जो पमाणं त्ति । (३५) (ङ)

चाण । श्रुतम् । भद्र ! निवेद्यताम् अमात्यराक्षसाय, अयम् इदानीं राजकार्य्यं करिष्यति ।

राक्ष । [स्वगतम्] कथं दासीकृत्य इदानीं विज्ञापनाय मां मुखरीकरोति कौटिल्यः ! का गतिः ? [प्रकाशम्] राजन् चन्द्र-

(३५) जयति जयति आर्य्यः । आर्य्य ! एष खलु भद्रभटभागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूमौ अवस्थापितः, तदिदं श्रुत्वा अत्र आर्य्यः प्रमाणमिति ।

नन्दस्नेहगुणा इत्यादि । नन्दस्नेहगुणाः नन्दानां प्रेमोत्कर्षाः हृदये स्पृशन्ति । किन्तु तद्विद्विषां नन्दशत्रूणां भृत्यः दासः अस्मि । ये द्रुमाः तरवः स्वयं आत्मना सिक्ताः जलसेकाः सन्तः वृद्धिं उपचयं अगमन् लेभिरे । त एव द्रुमाः नन्दवंश्या इत्यर्थः छिन्नाः निकृत्ताः विनष्टा इत्यर्थः । मया मित्रस्य सुहृदः चन्दनदासस्य शरीररक्षणकृते स्वदेहरक्षणाय शस्त्रं उचितयथाकार्य्यमस्त्रं व्यापारणीयं ग्रहणीयं, तथाहि कार्य्याणां कर्म्मणां गतयः परिणामाः विधेरपि आलोचनागोचरं विचारयोग्यतां न यान्ति, कर्म्मफलेन सम्भवितव्यं गुरुत्वञ्च, कर्म्मफलेषु विधेरपि नीतदक्षता इति भावः । अर्थान्तरन्यासोऽलङ्कारः शार्दूलविक्रीडितं वृत्तम् ॥ १६

गुप्त। विदितमेव यथा वयं मलयकेतौ किञ्चित् कालान्तरम् उषिता (च) तत् परिरक्ष्यन्ताम् अस्य प्राणाः।

राजा। [ चाणक्यमुखम् अवलोकयति ]।

चाण। वृषल! प्रतिमानयितव्योऽयम् अमात्यराक्षसस्य प्रथम-प्रणय [ पुरुषम् अवलोक्य ] भद्र!, अस्मद्वचनात् उच्यन्तां भद्रभट-प्रभृतय, अमात्यराक्षसविज्ञापितो देव चन्द्रगुप्त प्रयच्छति मलय-केतवे पित्र्यमेव विषयम्; अतो गच्छन्तु भवन्त सह अनेन, प्रति-ष्ठिते च अस्मिन् पुन आगन्तव्यम्। (छ)

पुरु। जं अज्जो आणवेदि त्ति। (२६)

चाण। तिष्ठ तावत्, भद्र! भद्र! एवम् अपरम् उच्यतां विजय-पालो दुर्गपालश्च, अमात्यराक्षसस्य ग्रहणेनशस्त्रस्य मोल्यः देवचन्द्र-गुप्त समाज्ञापयति, एष तावत् श्रेष्ठी चन्दनदासः पृथिव्यां सर्वेषु नगरेषु श्रेष्ठिपदम् आरोप्यताम् इति। (ज)

पुरु। जं अज्जो आणवेदि। (२७)

[ इति निष्क्रान्त ]।

चाण। भो राजन् चन्द्रगुप्त! किं ते भूय प्रियं करोमि?

राजा। किमत परं प्रियमस्ति?

---

(२६) यदार्य्य आज्ञापयति इति।
(२७) यदार्य्य आज्ञापयति।

---

श्लथित करचरणं यस्य स श्लथितकरचरणः सनद्धसंवाद। आर्य्य मान्य महा-जन। प्रमाण प्रमाता कर्त्तव्यावधारणकर्त्ता इत्यर्थ।

(च) अदास दास कृत्वा दासीकृत्य अधुना अर्थे विधाय। विज्ञापनाय राज्ञे निवे-दनाय। अमुखर मुखर करोति मुखरीकरोति वाचालयतीत्यर्थ। मलयकेतौ इत्यत्र विषयतया सप्तमी। मलयकेतु आश्रित्येत्यर्थ। उषिता वास कृतवन्त।

(छ) प्रतिमानयितव्य प्रतिपाल्यो रक्षितव्य इत्यर्थ। प्रथम आदिम। प्रणय प्रार्थना। अस्मद्वचनात् मद्वाक्यानुसारेण। अमात्यराक्षसेन विज्ञापित। प्रयच्छति ददाति। पित्र्य पैतृक। विषयं देशं। अस्मिन् मलयकेतौ।

(ज) श्रेष्ठिपद वणिक्पद आरोप्यतां प्राप्यताम्। एनेन चन्दनदासाय सर्वाधिकाराधिकारो दत्त।

राक्षसेन समं मैत्री; राज्ये चारोपिता वयम्।
नन्दाश्चोन्मूलिता: सर्वे, किं कर्त्तव्यमत: परम्? ॥ १७

चाण। विजये! उच्यतां दुर्गपालो विजयपालश्च, अमात्यराक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्त: समाज्ञापयति, विना हस्त्यश्वं क्रियतां सर्वबन्धमोक्ष इति। अथवा, अमात्यराक्षसे नेतरि किं हस्त्यश्वेन प्रयोजनम्? (भ) तदिदानीम्,—

सह वाहनहस्तिभ्यां मुच्यतां सर्वबन्धनम्।
मया पूर्णप्रतिज्ञेन केवलं बध्यते शिखा ॥ १८

[इति शिखां बध्नाति]।

प्रती। जं अज्जो आणवेदि। (३८)

[इति निष्क्रान्ता]।

चाण। अमात्यराक्षस! तदुच्यतां, किं ते भूय: प्रियम् उपकरोमि?

राक्ष। किमत: परमपि प्रियमस्ति? यदि न परितोष:, तदिदमस्तु।—

भरतवाक्यम्।

वाराहीमात्मयोनेस्तनुमतनुबलामास्थितस्यानुरूपां,
यस्य प्राग्दन्तकोटिं प्रलयपरिगता शिश्रिये भूतधात्री।
म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना संश्रिता राजमूर्त्ते:,
स श्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्त: ॥ १९

[इति निष्क्रान्ता: सर्वे]।

---

(३८) यदार्य आज्ञापयति।

---

राक्षसेनेत्यादि। राक्षसेन नन्दामात्यमुख्येन मौर्यकुलपेण सह सार्द्धं मैत्री सख्यं, वयं राज्ये साम्राज्ये आरोपिता: प्रतिष्ठापिता:। सर्वे नन्दा उन्मूलिता: अत: परं इतोऽन्यत् किं प्रियं कर्त्तव्यं करणीयमस्तीति शेष: ॥ १७

(भ) अमात्यराक्षसस्य परिग्रहेण स्वीकारेण। प्रीत: सन्तुष्ट:। नेतरि नायके परिपालके।

सह इत्यादि। वाहनहस्तिभ्यां अश्वगजाभ्यां सह, हस्तिनो वाहनस्यापि प्राधान्ये भेदेन। सर्वेषां बन्धनं सर्वबन्धनं मुच्यतां। पूर्णप्रतिज्ञेन सम्पन्नप्रतिज्ञेन मया केवलं शिखा बध्यते बध्यते ॥ १८

वाराहीमित्यादि। प्रलय परिगता प्रलयवशिता प्रलयकालीनजलमग्ना इत्यर्थ:।